केम्पको द्वारा प्रस्तुतिः

# नूतना

एक्लेयर्स्, येषाम् अन्तः अधिकः चाकलेट्स्वादः!

यावत् भवन्तः नूतन केम्पको चाकलेट्-एक्लेयर्स् ग्रन्थिम् उद्घाटयन्ति तावता भवन्तः स्मेराननैः परिवृताः भवन्ति... किम् अन्यत् वक्तव्यं, भवता हस्ते रिक्तः एक्लेयर्सग्रन्थिः किन्तु अभिनन्दनानि तु निश्चयेन प्राप्यन्ते,
यतो वितीर्णः
खलु अपूर्वः स्वादः!





R K SWAMY/CL/5197/SKT

भारतस्य अतिश्रेष्ठया
अत्याधुनिकसंस्थया प्रस्तुतीक्रियते
केम्पको लिमिटेड, मङ्गलूरु.

Black

# धातुपाठः

शिष्यः- श्रीमन्! गतमासे भवता उक्तम् आसीत्– आत्मनेपदि-परस्मैपदिविभागः कुत्रचित् एव ज्ञातुं शक्यः इति। तथा ज्ञानार्थम् उपायः सूचितः आसीत् अपि। इतरत्र तु अनुभवबलात् एव ज्ञातव्यं भवति इत्यपि उक्तम् आसीत्। एवं तर्हि पाणिनिः केन मानेन विभागं कृतवान्? पाणिनिव्याकरणं सुपरिष्कृतम्। तर्हि तेन परिष्कृतः कोऽपि मार्गः आश्रितः स्यात् एव। एवं मार्गः सिद्धः यदि स्यात् तर्हि किमर्थं वा ज्ञातुं कोऽपि उपायः नास्ति इति उच्यते?

आचार्यः- भवतः तर्कः युक्तः एव। पाणिनिः परिष्कृतेन मार्गेण एव व्यवस्थां कृतवान्। किन्तु सा च व्यवस्था उदात्तानुदात्तस्वरितस्वरान् आधारीकृत्य कृता अस्ति। यथा वेदमन्त्राः स्वरनिबद्धाः तथैव धातुपाठः अपि स्वरबद्धः आसीत्। पूर्वं तु पुस्तकाभावात् धातुपाठः मुखात् मुखं प्रसरति स्म। यदा पुस्तकम् आगतं तदा क्रमशः स्वरवैशिष्ट्यं नष्टम्। यः स्वरविशिष्टं धातुपाठं जानीयात् सः सुलभतया आत्मनेपदित्वं परस्मैपदित्वम् उभयपदित्वं वा निर्णेतुं शक्नुयात्।

शि - वेदाः सस्वराः एव इदानीं श्रूयन्ते। एवम् एव धातुपाठाः सस्वराः किं न श्रूयन्ते?

आ - नैव। अङ्गुलिगणनासाध्याः केचन जानीयुः, तावदेव। सर्वत्र सामान्यः धातुपाठः श्रूयते, न तु सस्वरः। अतः कः धातुः उदात्तस्वरसहितः, कः अनुदात्तस्वरसहितः कश्च स्वरितस्वरसहितः इति ज्ञानं न सुलभसाध्यम्। अतः एव आत्मनेपदित्वादिज्ञानम् अपि दुष्करम् एव।

यथा– एधधातौ धकारोत्तरः अकारः कीदृशः (उदात्तः, अनुदात्तः, उत स्वरितः) इति ज्ञातं चेत् धातुः आत्मनेपदी, उत न इति निर्णेतुं शक्यते। स्वरपाठस्य अभावात् तादृशः निर्णयः न सुलभसाध्यः इदानीम्। अनुभवबलात् वयं वदामः – एधधातुः आत्मनेपदी इति।

शि - यथा सस्वरः वेदपाठः रक्षितः तथैव सस्वरः धातुपाठः अपि रक्षणीयः आसीत् खलु?

आ - आम्। तथा करणीयम् आसीत्....। किन्तु न कृतम्....।

शि - स्वरपाठतः अन्यः कोऽपि लाभः?

आ - 'इड्'व्यवस्था अपि एतदाधारेण अस्ति। यथा– पठिष्यति, पठित्वा, पठितुम् इत्यादौ इकारः (इट्) श्रूयते। त्यक्ष्यति, त्यक्त्वा, त्यक्तुम् इत्यादौ तत् नास्ति। धातुस्थस्य प्रथमस्वरस्य स्वरूपज्ञानेन एषा व्यवस्था ज्ञायते।

शि - एवं तर्हि स्वरपाठस्य लोपात् महती हानिः एव जाता। श्रीमन्! धातवः कति सन्ति?

आ - सामान्यतः द्विसहस्रं मूलधातवः सन्ति। प्रत्ययान् कांश्चन योजयित्वा अपि धातून् निर्मातुं शक्नुमः।

शि - केवलं द्विसहस्रं धावतः एव?

आ - आम्, मूलधातवः तावन्तः एव। एतैः एव उपसर्गाणां प्रत्ययानां च योजनेन विभिन्नार्थकाः असङ्ख्याः शब्दाः निर्मातुं शक्यन्ते।

शि - 'एतावन्तः धातवः सन्ति' इति पाणिनिना निर्दिष्टं खलु?

आ - आम्, पाणिनिः धातुपाठं बोधितवान्। काशकृत्स्नादीनां धातुपाठाः अपि श्रूयन्ते। तथापि पाणिनीये धातुपाठे एव विशेषादरः सर्वत्र।

द्विसहस्रं धातवः सन्ति इति मया उक्तम्। किन्तु तत्रापि बहूनाम् अर्थं वयं न जानीमः। ते कस्मिन् अर्थविशेषे प्रयोक्तव्याः इत्यत्र स्पष्टता नास्ति। व्यवहाराभावः एव अत्र कारणम्।

शि - धातूनाम् अर्थनिर्देशम् अपि पाणिनिः एव कृतवान् वा?।

आ - न, पाणिनिः एध, पठ इति धातून् उक्तवान्। एध-वृद्धौ, पठ-व्यक्तायां वाचि इत्यादिरूपेण अर्थनिर्देशनं तु भीमसेनाचार्यस्य इति श्रूयते।

धातूनाम् अर्थनिर्देशः यद्यपि कृतः, किन्तु तस्मिन् एव अर्थे स च धातुः प्रयुज्यते इति नास्ति। धातवः अनेकार्थाः। अतः प्रामाणिकान् प्रयोगान् दृष्ट्वा धात्वर्थस्य निर्णयः करणीयः भवति।



# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

'पाणिनिव्याकरणनियमैः संस्कृतभाषा बद्धा अस्ति। अतः एव संस्कृतभाषायाः प्रगतिः कुण्ठिता जाता' इति बहूनां वादः। सभायां घण्टाघोषम् उद्घोषयन्ति ते। अत्र याथार्थ्यं कियत्?

वस्तुतः तु – पूर्वं भाषा अपरिष्कृता आसीत्। शब्दधर्मं साक्षात्कृतवन्तः मुनयः लोकव्यवहारे दृष्टान् शब्दान्, वाक्यानि, वाक्यरचनाः च सम्यक् परिशील्य विविच्य च नियमान् रचितवन्तः, काञ्चित् व्यवस्थां कल्पितवन्तः च। पाणिनिः तु सर्वेषां परिश्रमम् अपि विविच्य परमोत्कृष्टां व्यवस्थां रचितवान्, यत्प्रभावतश्च इतरे व्याकरणग्रन्थाः अनादरतां प्राप्य कालान्तरे लुप्ताः जाताः।

पाणिनिमते अपि शब्दरचनार्थं भाषाविकासार्थं वा यथेष्टम् अवकाशः अस्ति एव। यथा– वनितास्यूतः (Vanity-bag) पूर्वं न आसीत्। आधुनिकैः व्युत्पादितः स च शब्दः। वनितापदं स्यूतपदं च संस्कृतम्। अतः तयोः योजने न कोऽपि विरोधः। एवं योजनार्थं मार्गः निदिष्टः अस्ति। शब्दव्युत्पादनार्थं प्रकृतिप्रत्ययादयः निर्दिष्टाः सन्ति। एतान् आश्रित्य असङ्ख्यान् शब्दान् निर्मातुं शक्नुमः।

पाणिनिमतं भाषाक्षेत्रे स्वातन्त्र्यम् अङ्गीकरोति, न तु स्वाच्छन्द्यम्। कृतपरिश्रमस्य तु अत्र अनन्तः अवकाशः। यस्मिन् क्षेत्रे परिश्रमलेशोऽपि नास्ति तस्य क्षेत्रस्य विषये स्वाभिप्रायं निश्शङ्कं प्रकटयतां जनानां हस्तक्षेपार्थं तु अत्र नास्ति अवकाशः।

सम्पुटः–५ जुलै–१९८८ सञ्चिका–४

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००




# मैगी क्लब में आओ – हर पल मौज मनाओ

मैगी क्लब का सदस्य बनने के लिए मैगी नूडल्स के 5 खाली पैकेटों के सामने वाले हिस्से से डिज़ाइन में छपे नाम 'Maggi 2- Minute Noodles' काटो और हमें भेज दो। तुम्हें आजीवन सदस्य बनाने के लिए हम तुम्हें एक सुन्दर मैगी क्लब सदस्यता बैज और सर्टिफ़िकेट भेजेंगे। साथ में नीचे लिखे उपहारों में से तुम्हारा मनपसंद कोई भी एक उपहार भी।

• मैगी स्कूल फ़न सैट (20 बुक लेबल और एक टाइम-टेबल) • मैगी ट्रैफ़िक गेम • चाइनीज़ चित्र-पहेली • मैगी पोस्टर सेट • डिज़्नी टुडे कॉमिक (हर बार नया अंक)

अगर चाहो तो पाँचों उपहार एक साथ ले सकते हो। लेकिन ध्यान रहे, हर उपहार के लिए 5 पैकेटों से 'Maggi 2-Minute Noodles' काटकर भेजना ज़रूरी है।

सिर्फ़ इतना ही नहीं! मैगी क्लब में हम समय-समय पर तुम्हारे लिए कई रोचक चीज़ें पेश करते रहेंगे। इसलिए जल्दी करो और आज ही मैगी क्लब में शामिल हो जाओ।




**याद रखो:**

कटे हुए नामों को 60 पैसे के टिकट वाले लिफ़ाफ़े में डालकर एक कागज़ पर नीचे दिए विवरण के साथ हमें भेज दो :

नाम, पूरा पता, उम्र लड़का/लड़की,

कितने कटे हुए नाम भेजे हैं: कौन सा उपहार चाहिए:

अपना पत्र इस पते पर भेजो:

मैगी क्लब, पोस्ट बॉक्स नं. 5788, नई दिल्ली-110 055




HTA 6026HIN

# वृद्धिप्राप्तिः

श्रीरङ्गपुरे लक्ष्मणः नाम आपणिकः आसीत्। तस्मिन् ग्रामे अत्यधिकं वाणिज्यम् एतस्य एव आपणे प्रचलति। अतः लक्ष्मणः अचिरात् एव महाधनिकेषु अन्यतमः जातः। किन्तु सः इतरे धनिकः इव धनं कुसीदवाणिज्ये न नियुक्तवान्। एतत् दृष्टवतां बहूनाम् आश्चर्यम्।

प्रतिवर्षं लाभरूपेण यावत् प्राप्यते तावत् धनं सः कस्याञ्चित् पेटिकायां सुरक्षितरूपेण स्थापयति। एषः विषयः ग्रामस्थैः सर्वैः ज्ञायते एव।

लक्ष्मणस्य गृहस्य पार्श्वे रजनीशः नाम कुसीदवणिक् निवसति स्म। सः लक्ष्मणस्य व्यवहारं सुसूक्ष्मं परिशीलयन् आसीत्।

एकदा सः लक्ष्मणस्य समीपम् आगत्य पृष्टवान्– "भोः, भवान् वाणिज्ये दक्षः इति तु लोकविदितः विषयः। लाभरूपेण प्राप्तं धनम् एकत्र स्थापयति चेत् किं वा प्रयोजनम्? यथा वयं कुर्मः तथा तत् धनं कुसीदवाणिज्ये नियोजयतु। तेन भवदीयं मूलधनं तु सुरक्षितं तिष्ठति, वृद्धिः अपि प्राप्यते। इदानीं तु धनं तथैव तिष्ठति। तेन वृद्धिलाभः न भवति खलु" इति।

तदा लक्ष्मणः हासपूर्वकम् उक्तवान्– "यथा भवान् चिन्तयति तथा अविवेकी न अहम्। धनं यदा पेटिकायां स्थापयामि तदा तेन सह तस्य कुसीदवाणिज्ये नियोजनेन यावती वृद्धिः प्राप्येत तावत् धनम् अपि अधिकतया स्थापयामि। एवं च मम हानिः कुतः?" इति।





# अभिमानधनः

कस्मिंश्चित् ग्रामे नारायणः नाम सज्जनः आसीत्। सः यद्यपि निर्धनः, किन्तु अभिमानधनः। सः ग्रामे कमपि किमपि वस्तु न प्रार्थयते। उदारबुद्धया सर्वेषां साहाय्यं करोति, किन्तु कस्यापि साहाय्यं न इच्छति।

वीरभद्रः तस्य ग्रामस्य धनिकः। मित्रसमूहे कुत्रचित् उपविश्य आत्मनः विषये विकत्थनं तस्य स्वभावः। एतादृशे वार्तालापे मग्नं वीरभद्रं कदाचित् नारायणः उक्तवान्–. "श्रीमन्! भवान् मम साहाय्यं किञ्चित् कर्तुम् अर्हति वा?" इति।

वीरभद्रः धनिकः इत्यतः सः यद्यत् वदति तत्सर्वं श्रद्धया शृण्वन्तः आसन् तदीयाः स्नेहिताः। यदा नारायणः साहाय्यं प्रार्थितवान् तदा वीरभद्रः गर्वेण शिरः चालयन्– "कीदृशं साहाय्यम्? यदि मया शक्यं स्यात् तर्हि करिष्यामि एव" इति उक्तवान्।

"मम पुत्र्याः विवाहार्थं त्रिशतं सुवर्णनाणकानि ऋणरूपेण ....." इति यावत् नारायणः उक्तवान् तावता एव तस्य कथनम् अर्धे एव स्थगयन् वीरभद्रः उक्तवान्– "भवता खलु पृच्छ्यते? नास्ति इति कथं वक्तुं शक्नोमि? अवश्यं नयतु। अधिकम् आवश्यकं चेदपि निस्सङ्कोचं पृच्छतु" इति।

"भवता धनं दातव्यं नास्ति। धनं तु शिवगुप्ततः स्वीकुर्वन् अस्मि। समर्थस्य कस्यचित् प्रतिभूत्वं यदि स्यात् तर्हि ऋणं दास्यामि इति वदति शिवगुप्तः" इति उक्तवान् नारायणः।

"त्रिशतं सुवर्णनाणकानि खलु अपेक्षितानि? धनम् अहम् एव दास्यामि। तदर्थं शिवगुप्तपर्यन्तं गमनं, मम प्रतिभूत्वम् इत्यादिकं किमर्थम्?" इति सगर्वं पृष्टवान् वीरभद्रः।

"तथा मास्तु। भवान् वृद्धिं न स्वीकरिष्यति। वृद्धिरहितस्य धनस्य स्वीकरणेन मम तृप्तिः न भविष्यति" इति उक्तवान् नारायणः।

तदा वीरभद्रः साग्रहम् उक्तवान्– "वृद्धिं विना ऋणप्राप्तिः सौभाग्यम् इति भावयतु। मत्तः एव ऋणं स्वीकरणीयं भवता" इति।

चर्चां कर्तुम् अनिच्छन् नारायणः उक्तवान्– "श्रीमन्! प्रतिभूः भवितुं भवान् न इच्छति चेत् स्पष्टं वदतु। अन्यं समर्थं पश्यामि" इति।

"एवं तर्हि अन्यान् कांश्चन पृष्ट्वा ते यदा निराकृतवन्तः तदा मम समीपम् आगतवान् वा?" इति असमाधानेन पृष्टवान् वीरभद्रः।

"श्रीमन्! शपथपूर्वकं वदामि – सर्वप्रथमं भवतः समीपम् एव आगतवान् अस्मि" इति विनयेन उक्तवान् नारायणः।

तदा वीरभद्रः तृप्त्या शिरः चालयन् उक्तवान्– "नारायण! भवतः वचने मम पूर्णः विश्वासः अस्ति। अभिमानधनः भवान् कमपि साहाय्यं न याचते इति ग्रामे सर्वे जानन्ति। एतादृशः भवान् यदा साहाय्यस्य आवश्यकता आगता तदा साक्षात् मम समीपम् एव आगतवान्। एवम् आगमने किमपि विशेषकारणं स्यात् एव। ग्रामे इतरेषु धनिकेषु सत्सु अपि भवान् मत्समीपं यत् आगतवान् तत्र किं कारणम्? वदतु तावत्, अत्रत्याः सर्वे शृण्वन्तु नाम" इति।

एवं कथयतः वीरभद्रस्य मनसि अन्या अपि स्वार्थभावना आसीत्। सा च– 'नारायणः



सामान्यतः कस्यापि स्तुतिं न करोति। सः यस्य स्तुतिं करोति तस्य गौरवं विशेषतः वर्धते। इदानीं धनम् आवश्यकम् इत्यतः नारायणः मम गुणानां प्रशंसां कृत्वा 'एतदर्थम् एव भवतः समीपम् आगतवान्' इति वदिष्यति। तेन मम गौरवं वर्धते' इति।

प्रशंसाप्राप्त्यर्थम् अल्पम् अपि विषयं पर्वतीकुर्वतः वीरभद्रस्य व्यवहारेण नारायणः खिन्नः। तथापि खिन्नतां गोपयन् सः सहजस्वरेण उक्तवान्– "कारणम् इदानीं वक्तुं न शक्नोमि। यदा कार्यं सेत्स्यति तदा वक्ष्यामि" इति।

"अस्तु तावत्, यदा कथयिष्यति तदा एते सर्वे उपस्थिताः भवेयुः। अस्तु वा?" इति पृष्टवान् वीरभद्रः।

नारायणः एतत् अङ्गीकृतवान्। तदा वीरभद्रः शिवगुप्तं स्वसमीपम् आहूय– "गुप्तमहोदय! नारायणवर्याय त्रिशतं सुवर्णनाणकानि ददातु। अहं प्रतिभूः अस्मि" इति उक्तवान्। शिवगुप्तः अङ्गीकृतवान्।

नारायणः ऋणं प्राप्य पुत्र्याः विवाहं यशस्वितया समापितवान्। अनन्तरं नारायणः पञ्चदशसु दिनेषु ऋणं वृद्धिसहितं प्रत्यर्प्य ऋणव्यवहारं समापितवान्।

एतां वार्तां निवेदयितुं नारायणः वीरभद्रस्य समीपं गतवान्। तदा वीरभद्रः मित्रमण्डलेन परिवृतः सन् जल्पने मग्नः आसीत्।

नारायणेन उक्तं श्रुत्वा सः आश्चर्येण पृष्टनवान्– "एतावच्छीघ्रं ऋणं प्रत्यर्पयितुं कथं शक्तवान्?" इति।





"नाम न प्रकटीकरोमि इति अहं तस्मै वचनं दत्तवान् अस्मि" इति उक्तवान् नारायणः। एतत् श्रुत्वा हसितवन्तः सर्वे मौनं स्थितवन्तः।

वीरभद्रः मन्दहासं प्रकटयन् उक्तवान्– "भवान् दत्तस्य वचनस्य पालकः इति अहं जानामि। अतः तस्य नामकथनार्थम् आग्रहं न करोमि। प्रतिभूत्वं सम्प्रार्थ्य मम समीपं किमर्थं आगतम् इत्यस्य कारणम् अनन्तरं कथयिष्यामि इति भवता उक्तं खलु? तत् वचनम् अपि परिपालयतु" इति।

"प्रतिभूत्वप्रार्थनायाः कारणं वक्तुं सिद्धः एव। तत् सर्वेषां पुरतः वदामि, उत एकान्ते?" इति पृष्टवान् नारायणः।

"यत् वक्तव्यं तत् एतेषां सर्वेषां पुरतः एव भवेत् इति पूर्वम् एव मया सूचितम् आसीत्। अतः तथैव भवतु" इति उक्तवान् वीरभद्रः।

"तर्हि शृण्वन्तु। अहं स्वाभिमानी पुरुषः। कदापि कमपि न याचितवान्। तथापि कस्यचित् सज्जनस्य मानरक्षणार्थं ऋणं स्वीकर्तुं सिद्धः जातः। शिवगुप्तः प्रतिभूत्वं पृष्टवान्। वृद्धिरहितं ऋणं दातुं भवान् सिद्धः आसीत् चेदपि भवन्तं केवलं प्रतिभूत्वं याचितवान्। प्रतिभुवः भवतः चिन्ता यथा न भवेत् तथा शीघ्रम् एव ऋणव्यवहारं समापितवान्। प्रवृत्तं तु एतावत् एव" इति उक्तवान् नारायणः।

तदा नारायणः उक्तवान्– "पुत्र्याः विवाहार्थं बहुभ्यः वर्षेभ्यः धनसङ्ग्रहं कुर्वन् आसम्। एवं सङ्गृहीतं धनं अन्यस्य महापुरुषस्य वशे स्थापितवान् आसम्। सः तत् धनं कारणान्तरेण स्वस्य उपयोगार्थं स्वीकृतवान्। एषा वार्ता कुत्रापि न वक्तव्या इति तेन प्रार्थितम् आसीत्। अतः अहं ऋणं कृतवान्। इदानीं सः तत् धनं प्रत्यर्पितवान्। अतः अहं ऋणव्यवहारं समापितवान्" इति।

"भवता विश्वासेन दत्तं धनं स्वकार्यार्थम् उपयुक्तवतः तस्य महापुरुषस्य नाम किम्?" इति उपहासपूर्णेन स्वरेण पृष्टवान् वीरभद्रः।

तत्र सम्मिलिताः सर्वे उपहासं प्रदर्शयन्तः उच्चैः हसितवन्तः।

"आत्मना यत् कृतं तत् निरूपितवान्

भवान्। मम एव समीपे आगत्य प्रतिभूत्वं यत् प्रार्थितवान् तस्य कारणं तु न उक्तवान् एव" इति उक्तवान् वीरभद्रः।

"कोऽपि धनिकः प्रष्टव्यः आसीत्, भवान् प्रार्थितः। तत्र विशेषकारणं किमपि नास्ति। अहं स्वाभिमानी इति लोकः एव जानाति। सज्जनस्य मानरक्षणार्थं मया स्वाभिमानः अपि परित्यक्तः। एतादृशेन मया साहाय्यं यत् प्रार्थितं तेन भवतः गौरवं वर्धते। मत्कारणतः भवतः गौरवं वर्धितम् इत्यतः मम अपि तृप्तिः" इति उक्तवान् नारायणः।

तत् श्रुत्वा वीरभद्रः पृष्टवान्– "एवं तर्हि मम वैशिष्ट्यं दृष्ट्वा भवान् साहाय्यं न प्रार्थितवान्? मत्तः अपि आत्मानम् एव श्रेष्ठं मन्यते वा भवान्?" इति।

"श्रीमन्! कस्यापि कथनेन श्रेष्ठत्वं न सिध्यति। अस्माकं व्यवहारं दृष्ट्वा जनाः योग्यतायाः निर्णयं कुर्वन्ति। अहं तु दाक्षिण्यशीलः। कस्यापि विषये किमपि स्वयं न वदामि। भवता आग्रहेण पृष्टम् इत्यतः मया उक्तम्। वस्तुस्थितिं विविच्य मया उक्तम्" इति उक्तवान् नारायणः।

"यदि एषः विषयः मया पूर्वम् एव ज्ञातः स्यात् तर्हि अहं प्रतिभूः न अभविष्यम्" इति कोपेन उक्तवान् वीरभद्रः।

नारायणः ततः निर्गन्तुम् उद्युक्तः सन् क्षणकालं परिवृत्य– "श्रीमन्! भवान् एवं कुर्यात् इति अहं जानामि स्म। अतः एव कार्यसमाप्तेः अनन्तरम् एव वदिष्यामि इति उक्तवान्। अनन्तरम् अपि भवता आग्रहेण पृष्टम् इत्यतः एव उक्तवान्" इति उक्त्वा ततः गतवान्।

किमपि महाकार्यं साधयन् अस्मि इति भावनया वीरभद्रः प्रतिभूत्वम् अङ्गीकृतवान् आसीत्। एतेन प्रशंसा लभ्यते इति भावयन् सर्वेषां पुरतः नारायणस्य अभिप्रायं पृष्टवान्। हस्तं स्वयं प्रदर्श्य अवलक्षणं श्रुतवान् इव।

एतदनन्तरं वीरभद्रः मित्रमण्डल्याम् उपविश्य आत्मश्लाघनं यत् करोति स्म तत् पूर्णतः परित्यक्तवान्।





# नूतनः सेनापतिः

एवं चन्द्रपुरं चन्द्रसेनः नाम राजा पालयन् आसीत्। चन्द्रपुरस्य पार्श्वे एव चक्रपुरराज्य् अस्ति। चक्रपुरं तु चित्रकेतुः नाम राजा पालयति स्म। अनयोः राज्ययोः मध्ये शाश्वतिकः विरोधः आसीत्। तदा तदा तयोः युद्धं प्रवर्तते स्म अपि।

एकदा चित्रकेतुः पूर्वसूचनां विना हठात् चन्द्रपुरराज्यस्य उपरि आक्रमणं कृतवान्। नितरां कुपितः चन्द्रसेनः रोषावेशेन युद्धम् आरब्धवान्। द्वयोः पक्षयोः मध्ये घोरं युद्धं प्रवृत्तम्। अन्ते चित्रकेतोः एव पराजयः जातः। चक्रपुरं चन्द्रसेनस्य अधीनं जातम्।

एतस्मिन् घोरे युद्धे चन्द्रपुरस्य सेनापतिः मृतः जातः। उपसेनापतिः शक्तिवर्मा तीव्रं व्रणितः। वैद्याः तस्य प्राणान् रक्षितवन्तः। किन्तु एकः पादः कर्तनीयः एव अभवत्।

अतः इदानीं चन्द्रपुरे नूतनसेनापतेः आवश्यकता उत्पन्ना। कः नियोजनीयः इति विषये राजा मन्त्री च शक्तिवर्मणः अभिप्रायं पृष्टवन्तः।

तदा शक्तिवर्मा उक्तवान्– "महाराज! अस्माकं सैन्ये ये दलनायकाः सन्ति तेषु बहवः शूरः धीराः समर्थाः विवेकिनः च। अतः काचित् स्पर्धात्मिका परीक्षा आयोजनीया। तस्यां यस्य जयः सः सेनापतिस्थाने नियोजनीयः" इति।

एवं परीक्षाव्यवस्थां कर्तुं राजा मन्त्रिणं शक्तिवर्माणं च नियुक्तवान्। तौ दलनायकानां कृते स्पर्धाम् आयोजितवन्तः। तस्यां स्पर्धायां द्वौ सर्वासु परीक्षासु उत्तीर्णौ जातौ।

तयोः एकस्य नाम जयः। अपरस्य नाम विजयः। अनयोः कतरः स्वीकरणीयः इति विषये पुनः चर्चा प्रवृत्ता। अन्ते मन्त्री

एकम् उपायं सूचयित्वा ततः निर्गतवान्।

अनन्तरदिने जयः मन्त्रिणं द्रष्टुं गतवान्। मन्त्री जयं परीक्षादृष्ट्या पश्यन् उक्तवान्– "भवान् सेनापतिस्थाने नियोजनीयः इति राजाज्ञा अस्ति। भवता स्वकार्यकौशलेन पूर्वतनः सेनापतिः अतिशेतव्यः। ज्ञातं खलु विजय!" इति।

मन्त्रिणः वचनं श्रुत्वा भीत्या उक्तवान् जयः– "श्रीमन्! अहं जयः, न तु विजयः" इति।

"कथम् एतत्? विजयं प्रेषयिष्यामि इति शक्तिवर्मणा उक्तम् आसीत् खलु?" इति उक्तवान् मन्त्री।

"कुत्रापि कोऽपि लोपः जातः। अहम् इदानीम् एव गत्वा शक्तिवर्माणम् अत्र आनेष्यामि" इति उक्त्वा त्वरया ततः गतवान् जयः।

किञ्चित्कालानन्तरं विजयः मन्त्रिणः समीपम् आगतवान्। तदा मन्त्री तम् उक्तवान्–"महाराजस्य आज्ञा यत् एतत्क्षणे भवान् सेनापतिपदे नियोजितः अस्ति इति। भवता पूर्वतनः सेनापतिः अतिशेतव्यः। ज्ञातं खलु जय?" इति।

मन्त्रिणः वचनं श्रुत्वा आश्चर्यं प्रकटयन् विजयः– "मन्त्रिवर्य! कोऽपि प्रमादः जातः। भवान् सेनापतित्वेन नियुक्तः इति उक्त्वा भवद्दर्शनार्थं शक्तिवर्मा मां प्रेषितवान्। भवान् एतं विषयं जानाति इत्यपि सः उक्तवान्। मम जयस्य च नाम्नि अक्षरमात्रः भेदः अस्ति। अतः भवता विजयः इति स्थाने जयः इति श्रुतं स्यात्। सन्देहः एतत्क्षणे एव निवृत्तः भवतु नाम" इति उक्त्वा रक्षकभटम् आहूय– "भोः, शक्तिवर्मणः समीपं गत्वा 'नूतनः सेनापतिः विजयः आह्वयन् अस्ति' इति उक्त्वा एतत्क्षणे तम् अत्र आनयतु" इति आज्ञापितवान्।

एतत् श्रुत्वा तृप्तिं प्रकटयन्– "विजय! अत्र प्रमादः कोऽपि न जातः। भवान् एतत्क्षणे एव सेनापतिस्थाने नियुक्तः अस्ति" इति हसन् उक्तवान् मन्त्री।



# समयस्फूर्तिः

एकदा राजा रविवर्मा मृगयार्थम् अरण्यं गतवान्। शूराः भटाः विदूषकश्च तम् अनुसृतवन्तः।

प्रातःकालतः मध्याह्नपर्यन्तम् अटनेन अपि तैः कोऽपि क्रूरमृगः न दृष्टः। अन्ते लतासस्यादीनां कोमलतृणानि खादन् बालः हरिणः तेषां दृष्टिगोचरः जातः।

राजा त्वरया तं बालं हरिणम् उद्दिश्य बाणप्रयोगं कृतवान्। पर्णादीनां कम्पनकारणतः स च बाणः हरिणे न लग्नः। हरिणस्य कण्ठस्य पार्श्वे एव अग्रे गतः। हरिणः झटिति पलायनम् अकरोत्।

एतत् दृष्ट्वा विदूषकः उद्गारं प्रकटितवान्– "अहो! अपूर्वं कौशलम्" इति।

तदा राजा कोपेन– "एतादृशम् अभिनन्दनं विनोदार्थम् उक्तं चेदपि अहम् अपमानकरं भावयामि इति जानाति खलु?" इति पृष्टवान्।

तदा विदूषकः हसन् उक्तवान्– "भवतः उपहासः मया न कृतः। वस्तुतः मम प्रतिक्रिया भवतः बाणप्रयोगविषये न आसीत् एव। हरिणविषयिकां करुणाम् अहं श्लाघितवान्। इतरे यावत् जानीयुः ततः पूर्वम् एव कौशलेन भवान् तं हरिणं जागरितवान् खलु? तत् तु अपूर्वं कौशलम्" इति।

एतत् श्रुत्वा प्रसन्नः राजा कण्ठे स्थितं रत्नहारं निष्कास्य विदूषकाय दत्तवान्।





# कूर्मशुक्तिः

पूर्वं चीनादेशे सूचौनगरे वेनूषीयः निवसति स्म। तस्य बुद्धिमत्ता अपूर्वा आसीत्। क्रीडासु, चित्रकलायां, नृत्ये, सङ्गीते, वाद्यवादने च सः महानिपुणः। सः यत् क्षेत्रं प्रविशति तत्र सफलः भवति।

तस्य बाल्ये कश्चन ज्योतिषिकः तदीयां जन्मकुण्डलीं दृष्ट्वा उक्तवान् आसीत् यत् एषः भाविनि काले धनिकः भविष्यति इति। किन्तु यदा सः प्रौढः जातः तदा अपि धनिकत्वस्य लक्षणम् अपि न दृष्टं तस्मिन्। विद्यमानं धनं स्वेच्छया व्ययीकुर्वन् सन्तोषेण दिनानि यापयति वेनूषीयः।

अल्पे एव काले पित्रार्जिता सम्पत्तिः समाप्ता। तस्य समवयस्काः तु विविधोद्योगे नियुक्ताः, वाणिज्यादिषु प्रवृत्ताः वा यथेष्टं धनं सम्पादितवन्तः आसन्। एतत् दृष्ट्वा वेनूषीयः अपि धनसम्पादनेच्छया वाणिज्यम् आरब्धवान्। किन्तु दुर्दैववशात् तेन तत्र महती हानिः अनुभूता।

एकदा चत्वारिंशत् वणिजः वाणिज्यार्थं महानौकया समुद्रमार्गेण गच्छन्ति इति वार्तां वेनूषीयः श्रुतवान्। 'माम् अपि नयन्तु' इति तान् वणिजः प्रार्थितवान् च। वेनूषीयस्य सम्भाषणं सरसं भवति इत्यतः ते प्रयाणे उत्साहवर्धनार्थम् एषः भवतु इति आलोच्य तस्मै आगमनार्थम् अनुमतिं दत्तवन्तः।

एतत्सन्दर्भे विविधाः देशाः द्रष्टव्याः इति वेनूषीयस्य आशयः। किन्तु वणिक्प्रमुखः चाङ्ग् उक्तवान् यत् भवान् अपि किञ्चित् वस्तु स्वीकृत्य वाणिज्यं करोतु इति। एतन्निमित्तं धनम् आवश्यकं खलु? अतः चाङ्ग् सर्वान् प्रार्थितवान् – एतस्मै किञ्चित् किञ्चित् धनं यच्छन्तु इति। बहवः धनदानं निराकृतवन्तः। वेनूषीयेण केवलं

"चीनादेशीय जानपदकथा"



रजतनाणकद्वयं प्राप्तम्। तदा वणिक्प्रमुखः चाङ्ग् उक्तवान्– "वाणिज्यार्थम् एतत् सर्वथा अपर्याप्तम्। अतः एतेन फलानि स्वीकरोतु। प्रयाणसमये खादितुं शक्यते" इति।

तदा नौकास्थानके कश्चित् नारङ्गफलानां विक्रयणं कुर्वन् आसीत्। वेनूषीयः स्वसमीपे यावत् धनम् अस्ति तावत् दत्त्वा नारङ्गफलकण्डोलान् क्रीतवान्। एतस्य एतादृशं व्यवहारं दृष्ट्वा सर्वे वणिजः हसितवन्तः।

केषाञ्चित् दिनानाम् अनन्तरं नौका कञ्चन देशं प्राप्तवती। नौकास्थाने स्थितवती च। ते सर्वे वणिजः एतं देशं जानन्ति स्म। तैः आनीतानि वस्तूनि अत्र दशगुणितेन मूल्येन विक्रीतानि भवन्ति स्म। तथैव एतद्देशस्थानि वस्तूनि चीनादेशे अधिकमूल्येन विक्रीयन्ते स्म। अतः एव चीनावणिजः एतद्देशे वाणिज्यं कर्तुं विशेषतः उत्साहिनः।

सर्वे वणिजः स्ववस्तुभिः सह नगरं प्रविष्टवन्तः। तदा वेनूषीयः नारङ्गफलानि स्मृतवान्।

सर्वे वणिजः तानि फलानि दृष्ट्वा हसितवन्तः इत्यतः वेनूषीयः प्रयाणसमये तानि अन्तः स्थापितवान् आसीत्। इदानीं सः कण्डोलैः सह नौकायाः उपरितनं भागं गतवान्। कण्डोलान् उद्घाट्य एकैकशः फलानि बहिः स्थापितवान्। एकस्य नारङ्गस्य त्वचं निष्कास्य सन्तोषेण फलदलानि खादितुम् आरब्धवान् च।

तद्देशीयैः इतःपूर्वम् एतादृशं फलं न दृष्टम् आसीत्। अतः ते रक्तवर्णेन प्रकाशमानानि तानि फलानि दृष्ट्वा आकृष्टाः अभवन्। नौकास्थानस्थाः ते क्षणकालं फलम् आसक्त्या पश्यन्तः आसन्। एकः धैर्येण अग्रे आगत्य एकं रजतनाणकं वेनूषीयस्य हस्ते स्थापयित्वा 'एकं फलं ददातु' इति अभिनयेन प्रार्थितवान्। वेनूषीयः एतां प्रतिक्रियां न निरीक्षितवान् आसीत्। सः आश्चर्यम् अनुभवन् एकं फलं दत्तवान्। सः क्रेता सन्तोषेण तस्य फलस्य रसम् आस्वादितवान्।

पुनः दश नाणकानि दत्त्वा दश फलानि क्रीत्वा ततः निर्गतवान्।

अनन्तरं नारङ्गफलं क्रेतुं जनाः अहमहमिकया आगतवन्तः। वेनूषीयः मूल्यं वर्धितवान्। तथापि ते तावता मूल्येन फलानि क्रीत्वा गतवन्तः। अल्पे एव काले अर्धात् अधिकः भागः विक्रीतः अभवत्। वेनूषीयेन विशेषलाभः अपि प्राप्तः।

स्ववाणिज्यं समाप्य प्रत्यागताः वणिजः वेनूषीयस्य नारङ्गविक्रयणं श्रुत्वा आश्चर्यचकिताः। ते सूचितवन्तः– "भोः, भवान् अदृष्टशाली। इदानीं यत् धनं प्राप्तं तेन एतद्देशीयानि वस्तूनि क्रीत्वा चीनादेशे विक्रीय विशेषलाभं सम्पादयतु" इति। किन्तु वेनूषीयः विशेषलाभम् अनिच्छन् यावत् प्राप्तं तावता एव तृप्तः अभवत्।

वणिजः आत्मना आनीतानि वस्तूनि पूर्णतः विक्रीय तद्देशीयानि वस्तूनि यावच्छक्यं क्रीतवन्तः। पञ्चदशानां दिनानाम् अनन्तरं प्रतिप्रयाणम् आरब्धम्। प्रयाणसन्दर्भे महान् झञ्झावातः आगतः। नौका नृत्यति इव। अनियन्त्रिता सा कस्यचित् द्वीपस्य तीरं प्राप्तवती। झञ्झावातः यदा न्यूनीभवति तदा इतः प्रस्थानं भवतु इति सर्वे निर्णीतवन्तः।

तत्समये वेनूषीयः कुतूहलेन तं द्वीपं द्रष्टुम् उद्युक्तः जातः। तदा वणिजः– "निर्जने अस्मिन् द्वीपे द्रष्टव्यं किं स्यात् भोः?" इति वदन्तः निरुत्साहं जनितवन्तः चेदपि



वेनूषीयः अग्रे गतवान्। किञ्चिद्दूरं गमनानन्तरं तेन कश्चन लघुपर्वतसदृशः मृद्राशिः दृष्टः। कुतूहलेन सः लतानां साहाय्येन उपरि गतवान्। परितः दृष्टिं प्रसार्य पादमूले यदा दृष्टं तदा विचित्रं वस्तु किञ्चन दृष्टिगोचरं जातम्।

वेनूषीयः अवनम्य तत् वस्तु परीक्षितवान्। तच्च कूर्मस्य शुक्तिः आसीत्। किन्तु सा शुक्तिः मञ्चः इव विशालः आसीत्।

"अहो आश्चर्यम्! एतावान् विशालः कूर्मः अपि जगति भवति वा?" इति आलोचयन् वेनूषीयः क्षणकालम् आश्चर्येण स्थितवान्। अनन्तरं सः "एतादृशी कूर्मशुक्तिः केनापि न दृष्टा स्यात्। यदि अहम् एतद्विषये वदेयं तर्हि



कोऽपि तत्र न विश्वसेत्। अतः एतां मया सह नेष्यामि। द्विधा विदार्य पादादिकं योजयिष्यामि चेत् उत्तमं मञ्चद्वयं सेत्स्यति एव" इति आलोच्य शुक्त्याः कोणं वस्त्रेण बद्ध्वा आकर्षन् नौकासमीपं गतवान्।

वणिजः सर्वे तादृशीं शुक्तिं दृष्ट्वा आश्चर्यचकिताः। केचन उक्तवन्तः– एतस्याः नयनं व्यर्थम् एव इति। तदा वेनूषीयः उक्तवान्–"भवन्तः यथा विदेशीयानि वस्तूनि क्रीतवन्तः तथा मम एतत्। धनव्ययः तु कोऽपि न कृतः। अतः मया सह नयनेन न काऽपि हानिः" इति।

यदा वायोः वेगः स्थगितः तदा प्रयाणम् अनुवृत्तम्। यदा नौका चीनातीरं प्राप्तवती तदा मध्यगाः आगत्य 'एतैः एतैः वणिजैः एतस्य एतस्य वणिजः गृहं प्रति आगन्तव्यम्' इति आह्वानं दत्तवन्तः। एतदनुगुणं वेनूषीयः इतरे केचन वणिजः च इराणीवणिजः गृहं गतवन्तः। तस्य वणिजः नाम अबूब् हसन्। सः अतिथिनिमित्तं भोजनकूटं व्यवस्थापितवान् आसीत्।

एतादृशे भोजनकूटे सम्प्रदायः आसीत् यत् येन वणिजा अमूल्यं वस्तु आनीयते तस्मै अग्रासनं दीयते, यश्च अल्पमूल्यकं वस्तु आनीतवान् भवति तस्मै अन्तिमम् आसनम् इति।

एतस्य व्यवस्थार्थम् अबूब् तैः तैः आनीतानां वस्तूनां पट्टिकां परिशीलयन् आगतवान्। वेनूषीयस्य समीपे तु काऽपि पट्टिका न आसीत् एव। अतः सः पङ्क्तेः अन्ते उपवेशितः। भोजनं समाप्तम्।

अनन्तरदिने सः "वणिक् नौकया एतैः आनीतानि वस्तूनि द्रष्टुम् आगतवान्। नौकां यदा आरूढवान् तदा सः प्रथमं कूर्मशुक्तिं दृष्टवान्। सः गमनं स्थगयन् पृष्टवान्– "एषा अमूल्या शुक्तिः केन आनीता? एतस्याः यजमानः कः?" इति। वणिजः वेनूषीयस्य नाम सूचितवन्तः।

इराणीवणिजः मुखे असमाधानं कोपः च उद्भूतः। "बहोः कालतः भवन्तः मां जानन्ति। तथापि एतादृशस्य श्रेष्ठस्य वणिजः सामर्थ्यं गोपयन्तः तं पङ्क्तेः अन्ते




७

[ज्ञानभूमितः अदृश्यरूपेण निर्गतः विनोदः विषवायुम् अतिक्रम्य नूतने प्रदेशे गुहायां मुनेः पुरतः पतितवान्। मुनिः विनोदः च गुहातः निर्गत्य पर्वतमूले स्थिते नगरे अदृश्यरूपेण सञ्चारं कृतवन्तौ। निद्रास्पर्धायां स्थितान् जनान् आकृष्य पातितवन्तौ। नगरस्य विशेषान् पश्यन्तौ कस्यचित् देवालयस्य प्राङ्गणं प्राप्तवन्तौ। देवालयस्य द्वारं पिहितम् आसीत्। तदनन्तरम् ......]

आलयप्राङ्गणे सम्मिलितान् जनान् उद्दिश्य कश्चन उन्नतः पुरुषः उक्तवान्– "दैवयोगात् अस्मिन् वर्षे वयं सर्वान् पापिनः ग्रहीतुं शक्तवन्तः। ते पापिनः दृढकायाः पुष्टाः च सन्ति। एतान् बलिरूपेण अर्पयामः चेत् देवता निश्चयेन सन्तुष्टा भविष्यति" इति।

"ते पापिनः कुत्र सन्ति? कीदृशाः ते? वयं तान् द्रष्टुं शक्नुमः वा?" इति पृष्टवान् नायकः।

"अवश्यम्। एवम् आगच्छन्तु" इति वदन् सः उन्नतः पुरुषः तान् सर्वान् पञ्जरसमीपं नीत्वा पञ्जरस्थान् त्रीन् दृढकायान् प्रदर्शयन् उक्तवान्– "एषः क्रोधः। अपरः मत्सारः। श्मश्रुलः अस्ति खलु, सः लोभः" इति।

अनन्तरं सः तान् बलिरूपेण समर्पयितुम् उपयोक्तव्यं सुदीर्घं तीक्ष्णं च खड्गं प्रदर्शितवान्।

"मनोजदासः"



अदृश्यरूपेण स्थित्वा एतत्सर्वं परिशीलयन् मुनिः कोपावेशेन विनोदम् उक्तवान्– "हा हन्त! मया किमपि उक्तम् आसीत्। एते अन्यत् एव आचरन्तः सन्ति। एतत् नगरं भस्मसात्करणीयम्" इति।

मुनेः कथनस्य आशयं विनोदः न ज्ञातवान्। सः कुतूहलेन मुनेः मुखं दृष्टवान्।

"मनसि स्थिताः क्रोधमत्सरलोभादयः दुर्गुणाः त्यक्तव्याः इति मया बोधितम् आसीत्। किन्तु एते मूर्खाः अन्यदेशीयान् मुग्धान् जनान् आनीय क्रोधादिनाम निश्चित्य तान् देवतायै बलिरूपेण समर्पयन्तः सन्ति। अहो वैपरीत्यम्! अहो अन्याय्यम्!" इति उद्गारं प्रकटयन् मुनिः प्राङ्गणात् बहिः आगतवान्।

नगरे सर्वत्र सञ्चारेण तैः इतोऽपि बहवः विषयाः ज्ञाताः। नगरे कलिङ्गफलस्य विशेषविक्रयणं प्रचलति स्म। महता मूल्येन अन्यदेशीयाः कलिङ्गफलखण्डान् क्रीणन्ति स्म।

प्रतिदिनं सायङ्काले नगरनायकः पर्वतम् आरुह्य गुहायाः समीपं गत्वा स्वनगरीयेभ्यः आगन्तुकेभ्यः च यावत् आवश्यकं भवेत् तावदाकारकं फलं प्रार्थयति स्म।

अपूर्वस्य एतस्य फलस्य आकारः रुचिः च प्रतिदिनं सहस्रशः जनान् आकर्षति स्म। उदयकालीनरविः इव भासमानस्य कलिङ्गफलस्य दर्शनार्थम् अपि अन्यप्रदेशीयैः विशेषतः शुल्कं दातव्यम् आसीत्।

एवं प्राचीनैः प्राप्तस्य वरस्य दुरुपयोगेन नगरीयाः यथेष्टं धन् सम्पादयन्ति। स्वयम् अलसाः सन्तः निद्रायां कालं यापयन्तः अन्यदेशीयान् दुर्गुणनाम्ना आहूय बलिरूपेण देवतायै अर्पयन्तः उत्सवम् आचरन्तः जीवनं यापयन्ति!

सूर्यास्तपर्यन्तं विनोदः मुनिः च नगरे सञ्चारं कृतवन्तौ।

अनन्तरं पर्वतम् आरुह्य कलिङ्गलतायाः पार्श्वे विशालायाः शिलायाः उपरि उपविष्टवन्तौ।

किञ्चित्कालानन्तरं राजवेषेण भूषितः

नायकः तत्र आगतवान्। उत्साहेन मन्दस्वरेण गीतं गायन् आगतः सः आश्चर्यचकितः अभवत्।

यतः एतावत्पर्यन्तं गुहाद्वारं पिहितम् आसीत्। अद्य तु आवरणरूपेण स्थिता शिला पार्श्वं गता अस्ति। मनिः विनोदश्च अदृश्यरूपेण स्तः इत्यतः तयोः तत्र स्थितिं सः नायकः न जानाति।

नायकः गुहायाः अन्तः दृष्टिं प्रसारितवान्। किन्तु तेन तत्र किमपि न दृष्टम्। 'यत् भवेत् तत् भवतु नाम' इति आलोच्य सः उच्चस्वरेण उक्तवान्– "श्वः तादृशं फलं सिद्धं भवेत् यत् विंशतिसहस्रजनेभ्यः पर्याप्तं स्यात्" इति।

"विंशतिसहस्रजनेभ्यः पर्याप्तं भवेत्? का गणना एषा? भवतः नगरे तावन्तः जनाः सन्ति वा?" इति प्रश्नः नायकस्य पृष्ठभागतः आगतः।

शिलायाः उपरि उपविष्टः मुनिः विनोदः च क्रमशः दृष्टिगोचरौ जातौ।

"कौ भवन्तौ? कुतः आगतवन्तौ? अत्र किं कार्यं भवतोः?" इति नायकः दर्पयुक्तेन स्वरेण पृष्टवान्।

"एतस्यां गुहायां कश्चन महिमान्वितः मुनिः निवसति इति, तस्यैव मुनेः प्रभावतः अपूर्वस्य कलिङ्गफलस्य सृष्टिः प्रतिदिनं भवति इति च भवान् जानाति खलु?" इति पृष्टवान् मुनिः।

"आं, तथा श्रुतवान्। किन्तु तत्सर्वं मिथ्या इति मम भावना" इति उक्तवान् नायकः।



चिन्तयन्ति। परमार्थस्य चिन्तने कोऽपि न आसक्तः'' इति वदन् खेदेन निःश्वसितवान्।

एतावता समयस्फूर्तिं प्राप्य सः नायकः करौ योजयन् मन्दहासपूर्वकम् उक्तवान्– "महात्मन्! गुहातः बहिः आगत्य भवता दर्शनभाग्यं यत् कल्पितं तेन अहम् आत्मानं धन्यं मन्ये। एतावत्पर्यन्तं भवतः वसतिः गुहायाम् आसीत्। इतः परं सुखसाधनोपेते महाभवने भवतः वासार्थं व्यवस्थां करिष्यामि। शतशः वर्षेभ्यः भवता आहारः एव न दृष्टः स्यात्। अद्य आरभ्य भक्ष्यभोज्यादिसहितं विशेषभोजनं भवदर्थं सिद्धं भविष्यति'' इति।



"मया यत् पृष्टं तस्य उत्तरं वदतु प्रथमम्। विंशतिसहस्रं जनाः किं भवतः नगरे सन्ति? यदि न, तर्हि किमर्थं तावत्प्रमाणकं कलिङ्गफलं प्रार्थितं भवता?'' इति कोपेन पुनः पृष्टवान् मुनिः।

"नगरे विंशतिसहस्रं जनाः न सन्ति चेदपि पञ्चदश सहस्रं जनाः तु सन्ति एव। पञ्च सहस्रं जनाः प्रतिदिनम् यात्रिकरूपेण आगच्छन्ति। तेषां निमित्तम् अपि मया कलिङ्गफलं प्रार्थितम्। अन्यदेशीयेभ्यः धनं स्वीकृत्य एव कलिङ्गफलं दीयते, न तु निश्शुल्कम् यदि भवान् इच्छति तर्हि एवं प्राप्ते धने भवतः अपि कश्चन भागः भवतु। मम मनसि इदानीम् अन्यः एव उपायः स्फुरति। प्रतिदिनं भवान् पर्वतस्य उपरि

एवं कथनसमये तस्य स्वरे सन्देहः भीतिः च स्फुटं दृश्यते स्म।

"प्रतिदिनं कलिङ्गफलप्राप्तिः प्रत्यक्षं दृश्यते। एवं स्थिते तस्य स्रष्टुः मुनेः विषये मिथ्याभावना किमर्थम्? किम् एतत् उचितम्?'' इति असमाधानेन पृष्टवान् मुनिः।

एतस्य किम् उत्तरं वक्तव्यम् इति अजानन् सः नायकः शिरः अवनमय्य भूमिं पश्यन् स्थितवान्।

तदा मुनिः विनोदं पश्यन्– "पश्यतु भोः, एषा लोकरीतिः। पुष्पादीनां सौन्दर्यं सर्वे आस्वादयन्ति। किन्तु पुष्पे सौन्दर्यं योजितवतः सृष्टिकर्तुः विषये कदापि न

उपविश्य किञ्चित्कालं जनानां दृष्टिगोचरः भवतु। तेन सुलभतया धनं सम्पादयितुं शक्यते। एवं प्राप्तं धनं समग्रं भवदधीनम् एव भवतु नाम..." इति उत्साहेन वदन् आसीत् सः नायकः।

"मूर्ख! तिष्ठतु तूष्णीम्" इति कोपेन गर्जितवान् मुनिः। अनन्तरं क्षणकालं तत्र मौनं व्याप्तम् आसीत्। सूर्यास्तः जातः इत्यतः सर्वे पक्षिणः कलरवं कुर्वन्तः प्रतिगच्छन्तः आसन्।

"पर्वतस्य उपरि अपूर्वं कलिङ्गफलं सृजामि चेत् एतादृशसृष्टेः पृष्ठभूमौ स्थिताम् अलौकिकीं शक्तिं स्मरन्तः एते दैवभीरवः सदाचारसपन्नाः च भवेयुः इति मम विचारः आसीत्। प्रतिदिनं नियतरूपेण उदयमानं सूर्यं चन्द्रं नक्षत्राणि च दृष्ट्वा अपि ये आश्चर्यं न प्राप्नुवन्ति तादृशाः कलिङ्गफलसृष्टिं दृष्ट्वा परमार्थचिन्तकाः भवेयुः इति मया यत् निरीक्षितं तत्रैव दोषः अस्ति। मया एव महान् दोषः कृतः" इति स्वगतं खेदं प्रकटितवान् मुनिः।

क्षणकालानन्तरं तस्य भ्रूः वक्रा जाता। "श्वः अन्तिमं कलिङ्गफलं सृष्टं भविष्यति। तत् खण्डशः भवताम् उपरि पतिष्यति। तेन भवतां नगरस्य सर्वनाशः भविष्यति। विना वचनं निर्गच्छतु इतः। हुं" इति कोपेन आज्ञारूपेण उक्तवान् मुनिः।

नायकः मन्दया गत्या परिवृत्य मौनं ततः



निर्गतवान्।

"महात्मन्! भवतः क्रोधपूर्णं वचनं तेषु परिवर्तनम् आनेष्यति इति अहं भावयामि। ते स्वदोषं जानीयुः। एतवत्पर्यन्तं प्राप्तस्य अवकाशस्य सदुपयोगः न स्वीकृतः इति पश्चात्तापम् अनुभवेयुः अपि। इतः परं ते विवेकिनः भवेयुः" इति तं मुनिम् उक्तवान् विनोदः।

"तथा सुलभतया तेषां स्वभावे परिवर्तनं दृश्येत इति मम तु न भाति। मूर्खेषु विवेकस्य जागरणं न तथा सुकरम्। आवश्यकं चेत् भवान् नगरं गत्वा ते किं कुर्वन्तः सन्ति इति दृष्ट्वा आगच्छतु" इति विनोदम् उक्तवान् मुनिः।



"तथैव भवतु" इति उक्त्वा पर्वतात् अवतीर्य नगरं प्रति प्रस्थितवान् विनोदः। पूर्णिमाकारणतः सर्वत्र आह्लादकरी कौमुदी प्रसृता आसीत्।

नगरस्य मध्ये विशाले अङ्गणे सर्वे जनाः सम्मिलिताः आसन्। तेषां मध्ये वेदिकारूपे उन्नते स्थले नायकः स्थितः आसीत्। विनोदः तं प्रदेशं प्राप्तवान्।

सः अदृश्यरूपेण आसीत् इत्यतः कोऽपि तं द्रष्टुं न शक्नोति स्म।

नायकः एवं भाषणं कुर्वन् आसीत्— "....मुनेः वचनं मिथ्या यथा स्यात् तथा प्रयत्नः करणीयः अस्माभिः। कथञ्चित् नगररक्षणं करणीयम्। श्वः उषःकाले एव वयं सर्वे पर्वतसमीपं गच्छेम। कलिङ्गफलं खण्डशः यदा अधः पतति तदा तत् वयं गृहीत्वा खादेम। तेन तत् फलं कथमपि नगरं नाशयितुं न शक्ष्यति। भवन्तः सर्वे एतदर्थं सिद्धाः खलु?" इति।

एतत् श्रुत्वा सर्वे जनाः उत्साहेन— "वयं सर्वे सिद्धाः। भवान् यथा वदति तथा अवश्यं करवाम" इति करताडनपूर्वकम् उक्तवन्तः।

तत्क्षणतः अन्यस्मिन् दिने आपतिष्यतः अपायस्य सम्मुखीकरणार्थं सन्नाहाः आरब्धाः। कलिङ्गफलम् अधिकप्रमाणेन खादितुं यथा शक्येत तथा सर्वैः रात्रौ उपवासः आचरितः। पार्श्वस्थेभ्यः ग्रामेभ्यः सहस्रशः जनाः रात्रौ एव आनीताः। सर्वत्र कुतूहलम् आतङ्कः च।

जनानाम् अज्ञानं दृष्ट्वा मनसि एव हसन् खेदम् अनुभवन् च विनोदः मध्यरात्रसमये गुहासमीपम् आगतवान्।

यावत् आकाशे अरुणकिरणाः उदिताः ततः पूर्वम् एव जनाः सर्वे पर्वतमूले पङ्क्तिशः स्थिताः आसन्।

सूर्योदयसमये अपरः पर्वतः इव दृश्यमानं कलिङ्गफलम् उद्भूतम्। सूर्यकिरणप्रतिफलनतः प्रकाशमानस्य तस्य महाफलस्य दर्शनेन जनानाम् आतङ्कः प्रवृद्धः। तेषु अस्पष्टा भीतिः अपि उत्पन्ना सर्वेषु हृदयेषु भयस्य स्पन्दनम्!

तदा महता शब्देन कलिङ्गफल

विभक्तम्। तदीयाः खण्डाः जनानां मध्ये पतिताः।

जनाः अहमहमिकया तान् खण्डान् स्वीकृत्य मुखे स्थापितवन्तः। फलतः स्रुतं रसं सशब्दं पीतवन्तः। एकघण्टाभ्यन्तरे तत्र सर्वत्र कलिङ्गफलस्य त्वक् केवलं दृश्यते स्म, न अन्यत्।

अनन्तरं सर्वे आत्मना कृतं दशगुणितं वर्णयन्तः मुनेः वचनं विफलं जातम् इति सगर्वं वदन्तः समूहरूपेण ग्रामं प्रतिगतवन्तः। मध्याह्नसमये स च प्रदेशः निर्मानुषः जातः। नगरवीथीषु अपि जनसञ्चारः न्यूनः जातः।

अत्यधिकतया कलिङ्गफलस्य खादनतः बहूनाम् उदरे महती वेदना दृश्यते। सर्वेषां मनसि तु एका एव महती चिन्ता – श्वः आरभ्य किं खादनीयम् इति। कलिङ्गफलं तु श्वः न लप्स्यते। कलिङ्गफलं विना अन्यः आहारः तैः न दृष्टः अपि। आहारसम्पादनार्थं कोऽपि अन्यं मार्गं न जानाति। 'अतः श्वः आरभ्य जीवनं कथम्?' इति एकैकः अपि सगम्भीरं चिन्तयति। उत्तरं तु कोऽपि न जानाति।

तदा वृद्धाः केचन– "कलिङ्गफलस्य पतनेन नगरं नश्यति इति कथयतः मुनीश्वरस्य आशयः अन्यः एव। नगरं न नष्टम् इति गर्वेण न किमपि प्रयोजनम्। भग्नं फलम् एव अन्तिमम्। श्वः कलिङ्गफलप्राप्तिः सर्वथा न भविष्यति। तदा वयं जीवनमार्गं न द्रक्ष्यामः। वयं यदि जीवेम तर्हि एव खलु नगरस्य स्थितिः? यदा बुभुक्षया वयं मृताः भविष्यामः तदा नगरम् अपि स्वयं नष्टं भविष्यति। एतत् एव मुनेः कथनस्य तात्पर्यम्" इति व्याख्यानं कृतवन्तः।

एतत् श्रुतवतां जनानाम् आतङ्कः अधिकः जातः। सायंसमये सर्वे चिन्तासागरे निमग्नाः दृश्यन्ते स्म। मुनिः विनोदः च एवं चिन्तामग्नान् जनान् पश्यन्तौ ततः सुदूरं गतवन्तौ।

–(अनुवर्तते)






# विचित्रः निर्णयः

शिरसः भङ्गः कदापि न भविष्यति इति सुस्पष्टं जानन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवम् अवतार्य स्कन्धे आरोप्य वृक्षात् अवतीर्णवान्। अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! मध्यरात्रे मम एतत् वहनं स्वार्थसम्पादनार्थं भवता न क्रियते इति भावयामि। तर्हि अन्येन आत्मीयेन भवान् प्रेरितः स्यात् एव। यः भवन्तं प्रेरितवान् सः कार्यसिद्धेः अनन्तरम् अपि भवद्विषये यथापूर्वं गौरवं प्रदर्शयेत् इत्यत्र कः विश्वासः? अत्र उदाहरणरूपेण कस्यचित् राज्ञः तत्पुत्रस्य च कथां श्रावयामि। कथां शृण्वतः गच्छतः भवतः मार्गायासः तेन परिहृतः भवेत्। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा



महेन्द्रगिरेः शासकस्य पद्मपादस्य प्रवीणः नाम पुत्रः आसीत्। बहोः कालात् अनन्तरं जातस्य पुत्रस्य विषये महाराजस्य पद्मपादस्य विशेषव्यामोहः प्रीतिवात्सल्यादयः च आसन्।

प्रवीणः यदा पञ्चवर्षदेशीयः जातः तदा अक्षराभ्यासं कारयित्वा तं सिद्धमुनेः गुरुकुलं प्रेषितवन्तः। प्रवीणः राजकुमारः इत्यतः सिद्धमुनिः तं विशेषादरेण पश्यति। इतरेभ्यः विद्यार्थिभ्यः सामान्यम् अन्नं कन्दमूलादीनि च दीयन्ते चेत् प्रवीणाय रुचिकराणि भक्ष्यभोज्यादीनि अत्युत्कृष्टानि फलानि च दीयन्ते स्म।

पाठसमये अपि एवम् एव। इतरे विद्यार्थिनः भूमौ उपविशन्ति, प्रवीणाय तु मृदुलः तल्पः भूमौ स्थाप्यते।

ये योग्यम् उत्तरं न यच्छन्ति तान् सिद्धमुनिः निर्दाक्षिण्यं दण्डयति। किन्तु प्रवीणः प्रमादं करोति चेत् मौनं तिष्ठति स्म।

एवं गुरुकुले प्रवीणः कष्टं किमपि अप्राप्नुवन् श्रमं च अजानन् वर्धते स्म। प्रवीणः द्वादशवर्षदेशीयः जातः। इदानीं सः युक्तायुक्तं विवेक्तुं शक्नोति।

एकदा सः आचार्यम् उक्तवान्– "श्रीमन्! इतरेषां विद्यार्थिनां मम च मध्ये किमर्थं भेदभावप्रदर्शनम्? अहम् अपि ते इव विद्यार्थी एव खलु! शिक्षणसन्दर्भे ते इव अहं यत् न दण्डितः तेन एव अहं विद्यायां विशेषप्रावीण्यं प्राप्तुं न शक्नुतान्" इति।

तदा सिद्धमुनिः उक्तवान्– "वत्स! एतादृशः भेदभावः केवलम् अत्र न। सर्वेषु गुरुकुलेषु अपि एतादृशः एव व्यवहारः। भवान् यत्रकुत्रापि गच्छतु, विशेषगौरवं प्राप्स्यति एव" इति।

प्रवीणः तत्समये किमपि न उक्तवान्। किन्तु अनन्तरदिने कमपि अनुक्त्वा ततः निर्गत्य दूरस्थं ज्ञानमुनेः आश्रमं प्रविष्टवान्। आत्मनः नैजं परिचयम् अनुक्त्वा गुरुशुश्रूषां कुर्वन् भूमौ उपविशन्, कन्दमूलादिकम् एव खादन् विद्याभ्यासं कर्तुम् आरब्धवान्।

एतस्मिन् एव गुरुकुले वल्लभः नाम अन्यः अपि विद्यार्थी आसीत्। प्रवीणस्य वल्लभस्य

च गाढः स्नेहः प्रवृद्धः।

गूढचराः प्रवीणस्य अन्वेषणे आसन्। निरन्तरान्वेषणेन तैः ज्ञातं यत् प्रवीणः ज्ञानमुनेः आश्रमे सामान्यः इव विद्याभ्यासं कुर्वन् अस्ति इति। अतः ते ज्ञानमुनेः आश्रमम् आगत्य स्वकीयं परिचयम् उक्त्वा ज्ञानमुनिं प्रवीणं च आत्मना सह नीतवन्तः।

प्रवृत्तं समग्रं श्रुत्वा राजा पद्मपादः उग्रं कोपं प्रदर्शयन् ज्ञानमुनिम् उक्तवान्– "कियान् अहङ्कारः भवतः। युवराजं मम पुत्रं गौरवेण अपश्यन् तद्द्वारा स्वसेवां कारितवान्। तेन कन्दमूलादिकं खादितवान्। भाविनः राज्ञः अपमाननं कृतवान्। भाविनः राज्ञः अपमाननं नाम राज्यस्य एव अपमाननम्। प्राज्ञः भवान् एतावत् अपि न जानाति वा? आजीवनकारागारवासेन भवतः दण्डनम् एव उचितम्" इति।

तदा ज्ञानमुनिः उक्तवान्– "महाराज! अहं निरपराधी। प्रवीणः युवराजः इति इदानीं मया ज्ञातं, न तु इतः पूर्वम्। विद्याभ्यासार्थं सः आगतवान्। अहं सहजतया तं शिष्यत्वेन अङ्गीकृतवान्" इति।

'मुखलक्षणेन वा भवता तदीयं राजकुमारत्वं ज्ञातव्यम् आसीत्' इति राज्ञः वादः।

ज्ञानमुनिः यावत् वदति चेदपि पद्मपादः न अङ्गीकरोति। पुत्रव्यामोहेन बद्धः सः ज्ञानमुनिं कारागारे स्थापितवान् एव।



एतदनन्तरं द्वादश वर्षाणि अतीतानि। प्रवीणः इदानीं तरुणः। कदाचित् तस्य मनसि अयं विचारः आगतः यत् पितुः राज्यपालनविषये नागरिकाः किं वदन्तः सन्ति इति ज्ञातव्यम् इति।

अतः सः राजगृहसम्बन्धरहितम् एकं सारथिम् आहूय उक्तवान्– "भवान् मम वेषं धृत्वा मम स्थाने रथे उपविशतु। अहं सारथिवेषेण भवतः स्थाने उपविशामि, रथं चालयामि च। एतेन नागरिकाः किं वदन्तः सन्ति इति मया ज्ञायते" इति।

सारथिः एतत् न अङ्गीकृतवान्। तदा प्रवीणः कोपमिश्रितेन स्वरेण– "अहम् आज्ञां कुर्वन् अस्मि – एषः वेषः भवता धरणीयः

मया यथा उच्यते तथा आचरणीयं च" इति उक्त्वा स्वकीयं वेषं किरीटं च सारथये दत्तवान्।

अनन्योपायः सारथिः युवराजवेषं धृत्वा रथे उपविष्टवान्। युवराजः सारथिवेषं धृत्वा रथं चालयन् नगरसीमाम् अतिक्रम्य कस्यचित् वृक्षस्य अधः रथं स्थगितवान्।

समीपे एव कश्चन कुटीरः आसीत्। तत्र काचित् वृद्धा निवसति स्म। तस्याः पुत्रः तत्समये ज्वरेण पीडितः आसीत्। वृद्धा सावधानतया पुत्रं जलं पाययन्ती आसीत्।

तत्समये सारथिवेषेण स्थितः प्रवीणः कुटीरं प्रविश्य– "मातः! युवराजः तत्र रथे उपविष्टवान् अस्ति। सः पिपासितः। पानार्थं भवती किञ्चित् जलं ददाति वा?" इति पृष्टवान्।

एतत् श्रुत्वा सः ज्वरपीडितः पुत्रः उक्तवान्– "अम्ब! प्रथमं युवराजाय जलं दत्त्वा आगच्छतु। अन्यथा महाराजः कुपितः भवेत्। कुपितः सः भवतीं कठोरं दण्डयेत् अपि। ज्ञानमुनिविषये तेन एवम् एव आचरितं खलु? शीघ्रं गच्छतु अम्ब! अन्यथा ज्वरपीडितः अहं भवत्याः साहाय्यतः प्रीतितः चापि वञ्चितः भवेयम्" इति।

एतत् श्रुतवतः सारथिवेषधारिणः युवराजस्य प्रवीणस्य मनसि काऽपि अशान्तिः। सः झटिति गत्वा रथे उपविष्टवान्। रथम् अग्रे नीतवान् च। एवं गमनसमये कुत्रचित् रथस्य कीलस्य पतनकारणतः रथः अपतत् च। एतस्मिन्



अपघाते प्रवीणः सारथिः च तीव्रं व्रणितौ।

एषा वार्ता पद्मपादेन अपि ज्ञाता। सः सारथौ दोषम् आरोपयन् आदिष्टवान्– "भोः! युवराजवेषं धृत्वा भवता युवराजस्थाने यत् उपविष्टं सः अक्षम्यः राजद्रोहः। एतेन राजपरिवारस्य अपमाननं कृतम् इव। अतः भवता दश वर्षाणि यावत् कारागारे स्थातव्यम्" इति।

अनन्तरं प्रवीणकुमारः पितरम् एकान्ते दृष्ट्वा निवेदितवान्– "अत्र सारथेः कोऽपि दोषः नास्ति। मम अनुरोधेन सः तथा आचरितवान्। अतः सारथिः दण्डमुक्तः करणीयः" इति।

किन्तु पद्मपादः एतत् निराकुर्वन् उक्तवान्– "इदमिदानीं भवान् विवेकं प्राप्नुवन् अस्ति। युक्तायुक्ततां विवेक्तुम् इतोऽपि न समर्थः। एतादृशेन भवता उक्त चेदपि तेन तथा न करणीयम् आसीत्। एतस्मिन् अपघाते दुर्दैववशात् भवान् प्राणैः वियुक्तः यदि भवेत् तर्हि मम परिस्थितिः शोचनीया अभविष्यत्" इति।

एतदनन्तरं केषुचित् दिनेषु कश्चित् युवकः रक्षकाणां दृष्टिपातात् आत्मानं रक्षन् अन्तःपुरं प्रविष्टवान्। साक्षात् युवराजस्य शयनागारं प्रविश्य छुरिकया युवराजं मारयितुम् उद्युक्तः जातः।

किन्तु तत्समये प्रवीणः जागरूकः एव आसीत्। सः झटितिं उत्थाय आगन्तुकस्य हस्तात् छुरिकां वशीकृतवान्। अनन्तरं तस्य परिचयं प्राप्य उद्गारं प्रकटितवान्– "अये!





निष्कासितवान्। तस्मिन् अपघाते भवान् न मृतः। अतः इदानीम् अत्र आगतवान् अस्मि'' इति उक्तवान्।

प्रवीणः किमपि वक्तुं यावत् उद्युक्तः तावता राजभटाः तत्र आगतवन्तः। वल्लभं बद्ध्वा महाराजसमीपं नीतवन्तः। महाराजः तत्क्षणे एव विचारणां कृत्वा मरणदण्डनम् आदिष्टवान्। प्रातःकाले एव दण्डनं व्यवहारे आगच्छेत् इत्यपि आज्ञां कृतवान्।

आश्चर्यं नाम अनन्तरदिने उषःकाले एव प्रवीणः सेनां स्वाधीनीकृतवान्। अधिकारसूत्रं स्वहस्ते स्वीकृत्य पितरं कारागारे स्थापयन् आत्मनः राजत्वम् उद्घोषितवान्।

भवान्! वल्लभः!'' इति।

''आम्। अहम् एव। अहं सोऽयं वल्लभः यश्च ज्ञानमुनेः गुरुकुले भवतः आत्मीयः आसम्। भवता महान् गुरुद्रोहः आचरितः। तत्समये भवतः बुद्धिः पक्वा न आसीत्। अतः भवतः अपराधः नास्ति इति अहम् आलोचितवान् आसम्। किन्तु इदानीं प्राप्तवयस्कः सन् अपि भवान् गुरुं कारागारतः विमोक्तुं कमपि प्रयत्नं न आचरितवान्। एतस्य प्रतीकारं साधयितुम् अहम् आगतवान् अस्मि। भवतः मारणेन पुत्रव्यामोहवान् भवदीयः पिता विवेकं प्राप्नुयात् इति मम विचारः। अतः एव भवन्तं छाया इव अनुसृत्य रथस्य कीलकं

अनन्तरं वल्लभं मरणदण्डनात् मुक्तं कृतवान्। तथैव ज्ञानमुनिं सारथिं च कारागारात् विमोच्य तान् उक्तवान्– ''मत्कारणतः भवद्भिः अपराधे अकृते अपि दण्डनम् अनुभोक्तव्यम् आपतितम्। एतदर्थम् अहं क्षमां याचे। इदानीम् अहं सविनयं प्रार्थयामि यत् इतःपरं भवद्भिः मया सह स्थित्वा शासनव्यवहारे साहाय्यं करणीयं, अहं सम्यक् राज्यपालनं यथा कुर्यां तथा मार्गदर्शनं करणीयं चापि'' इति।

एतं प्रस्तावं ज्ञानमुनिः सारथिः च न अङ्गीकृतवन्तौ। 'एतत्कार्यं कर्तुं मम अर्हता नास्ति' इति उक्त्वा ततः निर्गतवान् सारथिः। 'अहं राजभवनवासं कदापि न इच्छामि' इति उक्त्वा आशिषा अनुगृह्य ज्ञानमुनिः अपि

ततः निर्गतवान्।

वल्लभः केवलं प्रवीणस्य प्रार्थनाम् अङ्गीकृत्य तत्रैव स्थितवान्।

वेतालः एवं कथां समाप्य अपृच्छत्– "राजन्! स्वविषये प्रीत्यतिशयं प्रदर्शयन्तं पितरं प्रवीणकुमारः किमर्थं कारागारे स्थापितवान्? यः वल्लभः द्विवारं मारणप्रयत्नं कृतवान् तस्य मरणदण्डनम् उचितम् एव आसीत् खलु? तथापि तं किमर्थं साहाय्यकत्वेन स्वीकृतवान् प्रवीणः? ज्ञानमुनिः सारथिः च किमर्थं साहाय्यं निराकृतवन्तौ? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः एवम् उक्तवान्– "वेषपरिवर्तनपर्वकम् अटनं यदा कृतं तदा रोगग्रस्तेन निर्धनबालकेन यत् उक्तं तत् श्रुतवति प्रवीणकुमारे विवेकः वस्तुतः उदितः। अतिशयितेन पुत्रव्यामोहेन पिता निन्दास्पदं जातः इति वस्तुस्थितिः प्रवीणेन ज्ञाता। निरपराधी सारथिः यदा दण्डितः प्रार्थितेन अपि पित्रा सारथेः दण्डविमुक्तिः यदा निराकृता तदा प्रवीणः नितरां खिन्नः! रात्रौ वल्लभः मारणार्थम् उद्युक्तः सन् अपि परिस्थितेः विवेचनं यत् कृतवान् तेन प्रवीणः इतिकर्तव्यतां स्पष्टं ज्ञातवान्। यावत् पिता सिंहासने स्थास्यति तावत् अन्याय्यं प्रचलिष्यति एव इति सः निश्चितवान्। अतः एव पितरं कारागारे स्थापयन् स्वयम् अधिकारसूत्रं स्वीकृतवान्। ज्ञानमुनिः सारथिः च स्वकर्तव्यपरायणौ अन्यत् कार्यं न इच्छतः। अतः तौ ततः निर्गतवन्तौ। विवेकं बोधितवन्तं वल्लभं प्रवीणः कथं वा दण्डयेत्? प्रवीणे यत् परिवर्तनं जातं तत् सम्यक् लक्षितवान् वल्लभः। एतत्सन्दर्भे आत्मनः साहाय्यस्य आवश्यकतां जानन् सः साहाय्यकरूपेण तत्रैव स्थितवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।



# चोरग्रहणम्

रत्नगिरिराजस्य कोषागारतः कदाचित् सहस्रं सुवर्णनाणकानि अपहृतानि अभवन्। 'भवता चोरः ग्रहीतव्यः' इति युक्तिवर्माणम् आदिष्टवान् राजा। तत्समये राज्ञा एषः अपि नियमः सूचितः यत् अनन्तरदिने सूर्यास्ततः पूर्वं चोरः ग्रहीतव्यः, अन्यथा स्वयम् आत्मार्पणार्थं सिद्धेन भवितव्यम् इति।

एतत् अङ्गीकुर्वन् युक्तिवर्मा उक्तवान्– "महाराज! यदि श्वः सूर्यास्ततः पूर्वं चोरं ग्रहीतुम् अशक्तः सन् अहम् आत्मार्पणं कुर्यां तर्हि वास्तविकः चोरः भवता मन्त्रिस्थाने नियोजनीयः। एवं नियोक्ष्यामि इति सभायाम् उद्घोषणीयम् अपि। मया अपि ग्रहीतुम् अशक्यः चोरः वस्तुतः महामेधावी भवेत् एव" इति।

राजा एतत् अङ्गीकृतवान्। अनन्तरदिने सूर्यास्तः अपि आसन्नः। तदा राजसभां प्रविश्य राजानम् उक्तवान् युक्तिवर्मा– "महाराज! चोरं ग्रहीतुम् अहं न शक्तवान्। अहम् आत्माहुत्यर्थं सिद्धः अस्मि। यथा मया प्रार्थितं तदनुगुणं चोरं मन्त्रिस्थाने नियोजयतु, येन मम आत्मा तृप्तः भवेत्" इति।

राजा तथैव प्रकटीकृतवान्।

"एवं तर्हि मां मन्त्रिस्थाने नियोजयितुम् अर्हति महाराजः" इति वदन् कोषाधिकारी सन्तोषेण उत्थितवान्।

राजा झटिति कोषाधिकारिणं कारागारे स्थापयितुं भटान् आदिष्टवान्। युक्तिवर्मणः चातुर्यस्य प्रशंसां कुर्वन् तं मन्त्रिस्थाने नियोजितवान् अपि।





काव्यकथा -

# राक्षसमुद्रिका-१

पूर्वं सर्वार्थसिद्धिः नाम राजा पाटलीपुत्रे निवसन् मगधराज्यं पालयन् आसीत्। तस्य आस्थाने राक्षसः नाम सर्वसमर्थः मन्त्री आसीत्। तस्य साहाय्यतः राज्यव्यवहारः निरातङ्कं प्रचलति स्म।

राज्ञः उभे पत्न्यौ। प्रथमा तु क्षत्रियकुलोत्पन्ना। तस्याः पुत्राः 'नन्दाः' इति ख्याताः। द्वितीया पत्नी शूद्रा मुरानामधेया। तस्याः पुत्रः मौर्यः। असमानप्रतिभाशाली सः मौर्यः सेनापतिकार्यं निर्वहति स्म।





मौर्यस्य कुमारः चन्द्रगुप्तः बाल्यतः एव अतीव बुद्धिमान् धैर्यवान्, साहसी च। अश्वारोहणे शस्त्रास्त्रप्रयोगे च चन्द्रगुप्तः नन्दादीनाम् अपेक्षया अपि समर्थतमः आसीत्।



राज्ञः सर्वार्थसिद्धेः अन्तिमकालः सन्निहितः। सः तत्समये चिन्तितवान् यत् सिंहासनस्य उत्तराधिकारी भवितुं मौर्यः एव समर्थः, न तु नन्देषु अन्यतमः इति। मौर्यविषये सर्वार्थसिद्धेः विशेषप्रीतिः आसीत्। अतः नन्देषु असूया उत्पन्ना।

राज्ञः मरणानन्तरं नन्दाः मौर्यस्य हननार्थं विविधप्रयत्नान् आरब्धवन्तः। एकदा मध्यरात्रे मौर्यस्य गृहम् आक्रम्य पत्नीपुत्रसहितं मौर्यं पातालगृहे बन्धने स्थापितवन्तः।





पातालगृहस्थेभ्यः मौर्यकुटुम्बीयेभ्यः कश्चन सेवकः एकस्य यावत् आवश्यकं तावत् एव आहारं जलं च रन्ध्रद्वारा दत्त्वा प्रतिगच्छति स्म।

"दीयमानः आहारः एकस्मै केवलं पर्याप्तम्। तं विभज्य सर्वे यदि खादेम तर्हि सर्वेषां मरणं तु निश्चितम्। एतदपेक्षया एकः केवलं खादति चेत् सः सजीवं स्थातुं प्रतीकारं साधयितुं च शक्नुयात्" इति ते निश्चितवन्तः। एतदनुसारं चन्द्रगुप्तम् अङ्गीकार्य प्राप्तम् आहारं प्रतिदिनं तस्मै दत्तवन्तः।





नन्देषु ज्येष्ठः मगधसिंहासनम् आरूढवान्। अल्पे एव काले कदाचित् वङ्गदेशात् कश्चन राजदूतः आगतवान्। तेन काचित् समस्या आनीता आसीत्। समस्यायाः परिहारः सूचनीयः इति वङ्गराजः सूचितवान् आसीत्। समस्यायाः योग्यं परिहारं सूचयितुं सभायां स्थितः कोऽपि न शक्तवान्।

तदा नन्दानां मन्त्रिषु अन्यतमः उक्तवान्– "कारागारस्थः चन्द्रगुप्तः एतादृशीनां समस्यानां परिहारे दक्षः। तम् आनयेम चेत् अस्माकं गौरवं रक्षितं भवेत्" इति। एतत् एव युक्तम् इति आलोचितवान् राजा अपि।





यदा पातालगृहस्य द्वारम् उद्घाटितं तदा दृष्टं यत् चन्द्रगुप्तः केवलं जीवति। एकवर्षानन्तरं चन्द्रगुप्तः इदानीं बाह्यं प्रपञ्चं पश्यन् अस्ति। तस्य स्नानार्थं भोजनाद्यर्थं च विशेषव्यवस्था कल्पिता। राजोचिताः वेषभूषादयः दत्ताः। अन्ते समस्या निवेदिता च।

चन्द्रगुप्तः राजसभाम् आगतवान्। वङ्गीयेन राजदूतेन उपस्थापितां समस्यां क्षणमात्रेण अवगत्य योग्यं परिहारं सूचितवान्। सभासदः चन्द्रगुप्तस्य प्रतिभां दृष्ट्वा आश्चर्यचकिताः सन्तः तं विविधरीत्या प्रशंसितवन्तः।





अनन्तरं जनाः तं गजस्य उपरि आरोप्य शोभायात्रां कृत्वा तं गृहं प्रापितवन्तः। एवम् अकस्मात् चन्द्रगुप्तेन जनानां विशेषादरः प्राप्तः आसीत्। अतः नन्दाः तं पुनः अपि कारागारे स्थापयितुं न शक्तवन्तः।

—(अनुवर्तते)




# अत्याशा क्लेशाय

तुरगपुरीग्रामस्य उत्तरस्यां दिशि काचित् तिन्त्रिणीवाटिका अस्ति। तस्याः अनन्तरं लघुशिखरस्य उपरि प्राचीनः कश्चन दुर्गाम्बादेवालयः अस्ति।

कुतश्चित् आगतः कश्चन बालपिशाचः तिन्त्रिणीवाटिकां प्रविश्य तत्रैव वासम् आरब्धवान्। सायङ्कालानन्तरं तिन्त्रिणीवाटिकाम् अतिक्रम्य दुर्गाम्बामन्दिरं प्रति गमनागमनं कुर्वतः जनान् सः पिशाचः आश्चर्येण पश्यति।

'अहम् अपि उन्नते स्थले तिन्त्रिणी वृक्षस्य उपरि अस्मि। एतावदेव उन्नतं पर्वतशिखरस्थं दुर्गाम्बादेवालयं गत्वा स्वकष्टानि निवेदयन्ति मानवाः। अन्धकारे तावद्दूरं गमनापेक्षया तिन्त्रिणीवृक्षस्य उपरि निवसतः मम पुरतः ते यदि कष्टं निवेदयेयुः तर्हि अहं किं तत् निवारयितुं न शक्नुयाम्?' इति आलोचयत् सः बालः पिशाचः।

एकदा कश्चन धनिकः दुर्गाम्बायाः दर्शनं कृत्वा मन्दान्धकारे ग्रामं प्रतिगच्छन् आसीत्। यदा सः तिन्त्रिणीवनं प्रविष्टवान् तदा पिशाचः तस्य पुरतः प्रत्यक्षीभूय अवदत्– "भवतः परिस्थितिं दृष्टवतः मम अतीव खेदः। तावद्दूरतः आगत्य कष्टेन पर्वतम् आरुह्य दुर्गाम्बायाः दर्शनं करोति खलु? किं सा कष्टम् अपसारितवती? मत्पुरतः भवान् स्वकीयानि कष्टानि निवेदयतु। क्षणमात्रेण तानि परिहरिष्यामि" इति।

पिशाचदर्शनेन दिग्भ्रान्तः अपि धनिकः क्षणकालानन्तरम् आत्मनि धैर्यं प्रपूर्य– "मम कष्टं किमिति निवेदयामि? मम यथेष्टम् ऐश्वर्यम् अस्ति। किन्तु रात्रौ निद्रां कर्तुम् एव न शक्नोमि। किं करणीयम् इत्येव




न ज्ञायते" इति सखेदम् अवदत्।

तदा सः बालः पिशाचः उत्साहेन अवदत्– "एवं वा? भवतः निद्राहीनतायाः कारणं मया ज्ञातम्। अद्य रात्रौ भवतः कष्टम् अपगतं भविष्यति। एतस्य प्रतिफलरूपेण दुर्गाम्बायाः मन्दिरम् इव मह्यम् अपि अत्र तिन्त्रिणीवने एकं मन्दिरं सज्जीकरोतु" इति।

"एतावदेव खलु? मम कष्टम् अपगतं भवतु। मन्दिरनिर्माणं तु अल्पस्य श्रमस्य कार्यम्" इति उक्त्वा धनिकः ततः गतवान्।

किञ्चित्कालानन्तरं मध्यमवर्गीयः कृषकः तिन्त्रिणीवनं प्रविष्टवान्। तस्य पुरतः स्थित्वा प्रश्नम् अकरोत् पिशाचः– "प्रतिदिनम् अपि भवान् नियतरूपेण मन्दिरं गच्छन् अस्ति। तथापि दुर्गाम्बा भवतः इष्टं न पूरितवती। एतत् सत्यं खलु?" इति।

"दैवाधीनं खलु जगत् सर्वम्!" इति उक्तवान् सः कृषकः।

"वृथा किमर्थं वस्तुस्थितेः अपलापः? भवतः मनसि किम् अस्ति इति अहं जानामि। अद्यैव भवतः इष्टं सिद्धम् इति भावयतु। मन्निमित्तं धनिकः मन्दिरनिर्माणं करिष्यामि इति आश्वासनं दत्तवान् अस्ति। एवं निर्मीयमाणे मन्दिरे भवान् प्रतिदिनं दीपं ज्वालयितुम् अर्हति वा?" इति अपृच्छत् सः बालः पिशाचः।

"मम इष्टं यदि सिध्येत् तर्हि न केवलं मन्दिरे, मम गृहे अपि भवन्नाम स्मरन् दीपं ज्वालयिष्यामि। मम पुत्री प्राप्तवयस्का अस्ति। वरपक्षीयाः यावत् धनं पृच्छन्ति तावत् दातुम् अहम् अशक्तः अस्मि। अतः सा अद्यावधि अविवाहिता एव अस्ति। न जाने, एतत् कष्टं कदा अपगच्छेत् इति" इति खेदेन उक्तवान् कृषकः।

"तत्सर्वं वक्तव्यं नास्ति। अहं सर्वं स्वयं जानामि। अद्य भवतः कष्टं निवृत्तं भविष्यति" इति अवदत् पिशाचः।

कृषकस्य निर्गमनानन्तरं निर्धना वृद्धा मन्दगत्या तिन्त्रिणीवनं प्रविष्टवती। तस्य वृक्षस्य समीपम् आगतवती च।

तस्याः पुरतः स्थित्वा पिशाचः अवदत्– "भवत्याः कष्टम् अहं निवारयिष्यामि।

प्रतिफलरूपेण अत्र निर्मीयमाणं मन्दिरं प्रति भवत्या जनाः आनेतव्याः, रथयात्रा कारणीया च" इति।



तदा निर्धना अश्रूणि स्रावयन्ती– "मम पतिः मद्यपः। किमपि कार्यं न करोति। मया सम्पादितम् अपि बलात् वशीकृत्य मद्यं पिबति। एतत् कष्टं निवृत्तं चेत् न केवलं रथयात्रायाः व्यवस्थां, रथयात्रादिने स्वयं नृत्यं करिष्यामि" इति उक्तवती।

"इतःपरम् एतादृशं कष्टं न भविष्यति। गृहं गत्वा पश्यतु" इति असूचयत् पिशाचः।

रात्रौ स्वप्ने पिशाचेन मन्दिरनिर्माणं, लक्षशः जनानाम् आगमनं, नित्यपूजा, रथोत्सवः नृत्यसेवा इत्यादयः दृष्टाः।

अनन्तरदिने सूर्यास्तानन्तरं धनिकः यथापूर्वं तिन्त्रिणीवनं प्रविष्टवान्। तम् अपृच्छत् पिशाचः– "किं भोः? रात्रौ सम्यक् निद्रा कृता खलु? मन्निमित्तं निर्मीयमाणस्य मन्दिरस्य आरम्भः कस्मिन् मुहूर्ते?" इति।

तदा धनिकः कोपेन गर्जितवान्– "भोः दुष्टबुद्धे! भवदर्थं मन्दिरस्य न, शवस्थानस्य निर्माणं करिष्यामि। निद्रायाः अभावस्य कारणं धनम् एव इति भावयन् भवान् मम सम्पत्तिम् अङ्गारमयीं कृतवान्। प्रथमं मम सम्पत्तिं यथापूर्वं करोतु। अन्यथा मन्त्रवादिद्वारा भवन्तं पातालं प्रति प्रेषयिष्यामि" इति।

मन्त्रवादिनः नामश्रवणेन एव भीतः पिशाचः अवदत्– "तादृशं किमपि मा करोतु कृपया। गृहं गत्वा पश्यतु। सर्वं यथापूर्वं दृश्यते" इति।

"अस्तु तावत्" इति उक्त्वा ततः निर्गतवान् धनिकः। अनन्तरं तत्र आगतं कृषकम् अपृच्छत् पिशाचः– "भवतः इष्टं सिद्धं खलु? दीपज्वालनसमये मम नाम्नः स्मरणं कृतवान् वा?" इति।

"भवदर्थं दीपः ज्वालनीयः? अहं पुत्र्याः विवाहं निर्वर्तयितुं कष्टम् अनुभवामि इति यत् उक्तवान् तत् श्रुत्वा भवान् मम पुत्रीं पुरुषरूपेण परिवर्तितवान्। अकाले उत्पन्नं श्मश्र्वादिकं दृष्ट्वा लज्जिता सा रुदती कोणे उपविष्टा अस्ति। तां यथापूर्वं सुन्दरीं करोतु।

अन्यथा मन्त्रवादिद्वारा होमं कारयित्वा तत्र भवन्तम् आहुतिरूपेण समर्पयिष्यामि" इति कोपेन उक्तवान् कृषकः।

पुनः अपि भीतः दिग्भ्रान्तः च पिशाचः दैन्येन अवदत्– "भोः, तथा न करोतु। गृहं गत्वा पश्यतु। भवतः पुत्री पुनरपि सुन्दरी जाता अस्ति" इति।

तस्य कृषकस्य निर्गमनानन्तरं सा निर्धना स्त्री आक्रोशनं कुर्वती पिशाचसमीपम् आगतवती। तदा पिशाचः अपृच्छत्– "किमर्थम् आक्रोशनम्? रथोत्सवदिने क्रियमाणस्य नाट्यस्य अभ्यासः तु एषः न खलु?" इति।

एतत् श्रुत्वा सा निर्धना कोपेन– "भवता यत् कृतं तदर्थं रथयात्रा न, अपि तु भवतः निखननं कारणीयम्। मम पतिः मम सम्पादनम् अपि स्वीकरोति इति यत् उक्तं तदर्थं भवान् तं हस्तपादादिचालने असमर्थं कृतवान्। किं मम सौभाग्यम् अपहर्तुम् इच्छति?" इति रुदती उक्तवती।

"मातः! तथा न करोतु। भवत्याः पतिः यथापूर्वम् रागालापनं कुर्वन् गृहे स्थितः अस्ति। गत्वा पश्यतु" इति अवदत् पिशाचः। पिशाचं पुनः पुनः निन्दन्ती ततः निर्गतवती सा निर्धना वृद्धा।

'इतः परम् अत्र निवासेन अपायः एव भवेत्' इति आलोच्य ततः निर्गतवान् सः पिशाचः। ततः अरण्यं गत्वा विशालं वटवृक्षम् आश्रित्य स्थित्वा आलोचितवान् सः– "तेषां हितार्थं मया यत् कृतं तत् किमर्थं विपरीतं परिणामम् अजनयत्?" इति।

तदा तस्मिन् एव वृक्षे चिरकालात् स्थितः वृद्धः पिशाचः एतस्य बालपिशाचस्य खेदस्य कारणं पृष्ट्वा ज्ञात्वा च अवदत्– "मित्र! अत्र भवतः एव दोषः। मानवाः देवान् एव पूजयन्ति, न तु पिशाचादीन्। मन्दिराणि अपि देवानाम् एव, न तु पिशाचानाम्। अन्यच्च पिशाचाः वयं सत्कार्यं कर्तुं किं, चिन्तयितुम् अपि न शक्नुमः। अतः ग्रामवासविचारं परित्यज्य अत्रैव सुखेन निवसतु" इति।






कृष्णः इदानीं बाल्यावस्थाम् अतिक्रम्य किशोरावस्थां प्राप्तवान् अस्ति। तस्य सौन्दर्यं द्विगुणितम्। बलपराक्रमादयः चतुर्गुणिताः सन्ति।

वृन्दावने सर्वासां युवतीनाम् आराध्यदेवः कृष्णः एव। लीलाविलासैः सः सर्वान् तोषयति।

एकदा कौमुदीमय्यां रात्रौ गोपिकाभिः परिवृतः कृष्णः वेणुवादने मग्नः आसीत्। तत्समये अरिष्टो नाम राक्षसः दृप्तवृषभवरूपं धृत्वा घीङ्कुर्वन् कृष्णस्य मारणार्थम् आगतवान्।

तस्य आकारं, श्वासोच्छ्वासरीतिं, खुरैः धूल्युत्पादनवैखरीं च दृष्ट्वा भीताः गोपाङ्गनाः "कृष्ण! कृष्ण!" इति वदन्त्यः कृष्णस्य आश्रयं प्रार्थितवत्यः।

'भीतिः सर्वथा मास्तु' इति उक्त्वा कृष्णः वृषभस्य समीपं गतवान्।

वृषभस्य शृङ्गद्वयम् उत्प्लुत्य गृहीत्वा कृष्णः तदीयं मुखं भूमौ नोदितवान्। श्वासोच्छ्वासं कर्तुम् अपि अशक्तः वृषभः कृष्णस्य ग्रहणात् विमोचनं प्राप्तुं पादान् वेगेन इतस्ततः चालयति स्म।

तदा कृष्णः तं वृषभं बलात् पादेन प्रहृतवान्। किञ्चिद्दूरे पतितः सः वृषभः रक्तं वमन् मरणं प्राप्नोत्। एतत् दृष्ट्वा मनःसमाधानं प्राप्य गोपाङ्गनाः बहुधा कृष्णस्य प्रशंसां कृतवत्यः।

ताः एवम् उक्तवत्यः— "भोः कृष्ण! भवतः उपस्थित्या वयं रक्षिताः। यदि भवान्



न स्यात् तर्हि अस्माकं का गतिः अभविष्यत्? अबलाः वयम् एतं दृप्तवृषभं कथं वा निग्रहीतुं शक्नुयाम? भवान् तु निरायासेन तं निगृहीतवान्। अहो पराक्रमः! अहो शौर्यम्! अहो वीर्यवत्त्वम्!" इति।

यथा यथा कृष्णः वर्धते तथा तथा मथुरायां स्थितस्य कंसस्य आतङ्कः अपि वर्धते। तस्य मनसि प्रतिक्षणम् अपि विविधाः विकल्पाः। तदीया मनःशान्तिः सर्वथा नष्टा अस्ति। तदीये मुखे न तेजः, कार्ये न उत्साहः,भोजने न रुचिः।

एवं स्थिते सः काञ्चित् सभाम् आयोजितवान्। तस्यां सभायां कारागारस्थः उग्रसेनः वसुदेवः च उपस्थितौ आस्ताम्। सत्यकः, अन्धकः, कम्पकः, दारुकः, विपृथः, बभ्रुः, यदुः, भोजः इत्यादयः प्रमुखाः अपि तत्र उपस्थिताः आसन्।

तस्यां सभायां कंसः एवम् उक्तवान्– "भवन्तः सर्वे महामेधाविनः, तीक्ष्णमतयः च। महतीम् अपि समस्यां क्षणमात्रेण परिहर्तुं समर्थाः। भवन्तः सर्वे मम हितचिन्तकाः इति तु निर्विवादास्पदः विचारः। एवं स्थिते मम उपरि आपतन्तीं विपदं दृष्ट्वा अपि भवन्तः किमर्थं मौनं सन्ति इत्येव मम समस्या। नन्दगोपस्य पुत्रः सामान्यः गोपालकः कृष्णः मम निर्मूलनार्थं बद्धकटिः अस्ति। अश्रद्धाकारणतः वर्धमानः रोगः इव सः प्रतिदिनं वर्धते। वायुना प्रेर्यमाणः मेघः इव, विषवृक्षः इव सः निरातङ्कं जीवति। कस्याः देवतायाः अनुग्रहेण सः जातः इत्येव न ज्ञायते मया। तस्य कार्याणि सर्वाणि अमानुषाणि एव।

सः किं किं कृतवान् इति विवृणोमि तावत्। यदा शिशुः तदा एव सः पूतनायाः प्राणान् अपहृतवान्। यदा च हस्तपादादिकं चालयितुं समर्थः तदा शकटासुरं लीलया मारितवान्। चलितुं समर्थः यदा जातः तदा महावृक्षद्वयं पातितवान्। एतादृशानि तदीयानि कार्याणि असङ्ख्यानि। कालियमर्दनं कृतवान् सः। प्रलम्बं धेनुकं च मारितवान्। अरिष्टः अपि तत्कारणतः गतप्राणः जातः। मया प्रेषितेषु एकः अपि सजीवं न प्रत्यागतः। इतोऽपि सः किशोरः। एतावता एव एवं समर्थः सः यौवने

बलशाली सन् किं वा न कुर्यात्? इतरेभ्यः सर्वथा विलक्षणः सः।

सप्त दिनानि यावत् धाराकारेण वृष्टिः यदा जाता तदा गोवर्धनपर्वतम् एव छत्रवत् लीलया उन्नीतवान्। तेन यद्यत् कृतं तत्सर्वं प्रायः अमानुषम् एव।

इदानीं समर्थेषु राक्षसेषु शिष्टः केशी एकः एव। सः अपि कदाचित् कृष्णस्य हस्तेन यदि मरणं प्राप्नुयात् तर्हि मया एव कार्यप्रवृत्तेन भवितव्यम्। मारणं यस्य प्रवृत्तिः सः किं मां सजीवं त्यजेत्? कृष्णस्य अनुरूपः अग्रजः बलरामः।



वस्तुतः कृष्णजन्मसन्दर्भे किं जातम् इति नारदः माम् उक्तवान् अस्ति।

देवकीदेवी यदा कृष्णं प्रसूतवती तदा एषः वसुदेवः तं शिशुम् उन्नीय नन्दगोपस्य पत्न्याः यशोदायाः पार्श्वे शाययित्वा स्त्रीशिशुं देवक्याः पार्श्वे शायितवान् इति श्रुतम्। सः स्त्रीशिशुः मम हस्तात् निर्गत्य आकाशे विन्ध्यवासिन्याः रूपं धृत्वा मां भाययित्वा गतवती। मम हितचिन्तकः इव अभिनयन् स्थितः वसुदेवः महान्तं विश्वासद्रोहम् आचरितवान् अस्ति। मया तु विशेषगौरवं प्रदर्शितम्। तेन तु विश्वासद्रोहः आचरितः!" इति।

अनन्तरं सः वसुदेवं पश्यन् पुनः उक्तवान्– "भवतः कुतन्त्रं मया ज्ञातम्। पुत्रद्वारा मां मारयित्वा पुत्रं सिंहासने उपवेशयितुम् इच्छति भवान्। किन्तु एतत् तु भवता स्मर्तव्यं यत् इन्द्रः अपि मां कम्पयितुं न अर्हति। भवान् चक्रवर्तिकुले जातः। बाल्यतः मम पित्रा पोषितः च। मम भगिनीं परिणीतवान् अस्ति। यादवानां गुरुः अस्ति भवान्। एतादृशः भवान् नीचकार्यं कर्तुम् अर्हति वा? अहं भवन्तं न मारयामि। भवता कृतं पापम् एव भवन्तं मारयिष्यति। अद्यावधि बान्धवाः, मित्राणि, ब्राह्मणाः च मया न मारिताः। इतः परम् अपि तादृशम् अकार्यं कर्तुं न इच्छामि। भवन्तं कुत्रापि प्रेषयितुं शक्नोमि। किन्तु तदपि न करोमि। भवान् यथा इच्छति तथा करोतु। गन्तुम् इच्छति चेत् गच्छतु, स्थातुम् इच्छति चेत् तिष्ठतु" इति।




अनन्तरं कंसः भोजवंशीयम् अक्रूरं पश्यन्– "भोः अक्रूर! अस्मिन् वर्षे मया महता वैभवेन धनुरुत्सवः करणीयः इति सङ्कल्पितम् अस्ति। तदर्थं सर्वे राजमहाराजाः आहूयन्ते। बहूनि दिनानि यावत् विशेषभोजनव्यवस्था करणीया भविष्यति। अतः गोकुलतः दधि, नवनीतं, क्षीरं, घृतं, मधु इत्यादयः महता प्रमाणेन आगच्छेयुः। अतः भवान् गोकुलं गत्वा एतां व्यवस्थां पश्यतु। नन्दगोपं तत्कुटुम्बीयान् च सहैव आनयतु। बलरामः कृष्णः च द्रष्टव्यौ इति मम महती इच्छा। तौ महाबलशालिनौ इति मया श्रुतम्। कथञ्चित् विश्वासम् उत्पाद्य भवता सहैव तौ आनेतव्यौ। मम समीपे द्वौ महामल्लौ स्तः। ताभ्यां सह बलरामकृष्णयोः स्पर्धाम् आयोजयिष्यामि। विजयिभ्यां ताभ्यां पारितोषिकं दास्यामि च। तौ बालौ आनीतौ चेत् भवन्तम् अपि विशेषपारितोषिकेण सत्करिष्यामि। वसुदेवः मध्ये किमपि सूचयेत्। तादृशं निर्लक्ष्य गच्छतु। बलरामकृष्णाभ्यां सह आगच्छतु च" इति उक्तवान्।

कंसपरिवारे बहूनां विश्वासः आसीत् यत् कृष्णः देवांशसम्भूतः इति। तेषु अक्रूरः अपि अन्यतमः।

कृष्णस्य दर्शनभाग्यं प्राप्तुम् अवकाशः लब्धः इति सः अतीव सन्तुष्टः। कंसस्य अनुमतिं प्राप्त रथम् आरुह्य सः अविलम्बेन गोकुलं प्रति प्रस्थितवान्।

कंसः पूर्णायां सभायां वसुदेवं यत् कठोरम् उक्तवान् तेन बहवः ज्येष्ठाः खिन्नाः। किन्तु सर्वेऽपि मौनं स्थितवन्तः।

तदा अन्धकः नाम वृद्धः यादवः धैर्येण उत्थाय अग्रे आगत्य कंसम् एवम् उक्तवान्–

"राजश्रेष्ठ! भवता राजोचितानि वचनानि न उक्तानि। पूर्वापरम् अनालोच्य भवान् वसुदेवस्य ज्येष्ठत्वम् अपि अविगणय्य अवाच्यैः शब्दैः निन्दितवान्। एतेन भवतः एव कुलस्य गौरवं नष्टम् अभवत्। वसुदेवेन पुत्ररक्षणं यत् कृतं तत् किं दोषाय? मातापितृभ्यां पुत्ररक्षणार्थं यत् क्रियते तत् कदापि दोषाय न भवति। मातापितृभ्यां पुत्ररक्षणम् अवश्यं करणीयम्। भवान् अपि

मातापित्रोः श्रमेण एव वर्धितः इति स्मरतु। कृष्णेन बाल्ये यद्यत् कृतं तत् भवता स्वयं ज्ञायते। तत्स्थाने स्थापितः स्त्रीशिशुः अपि भवतः हस्तात् च्युतः जातः। अद्यावधि कृष्णेन भवतः मेलनं यत् न जातं तेनैव भवान् जीवितः अस्ति। दुर्मार्गे गच्छन्तं भवन्तं दृष्ट्वा अपि वयं भवता सह यत् स्मः तत् अस्माकम् एव दोषः। अस्मासु अक्रूरः एव भाग्यशाली। कृष्णस्य दर्शनं प्राप्य प्रत्यागच्छतः अक्रूरस्य दर्शनेन अस्माभिः पवित्रैः भवितव्यम्। कृष्णः यदि अत्र आगच्छेत् तर्हि भवतः अन्तिमः कालोऽपि सन्निहितः इव। अतः इदानीं वा विवेकं प्राप्नोतु। स्वयं गोकुलं गत्वा कृष्णस्य मैत्रीं सम्पादयतु। एतेन एव भवतः हितं सेत्स्यति।

अहं कश्चन वृद्धः। भवान् तु चक्रवर्ती। अतः मया उक्तं भवते न रोचते इति अहं जानामि। तथापि कर्तव्यबुद्ध्या अहं बोधितवान्। इतःपरं दैवेच्छा यथा अस्ति तथा भवतु नाम।

प्राचीनाः वदन्ति– 'यौवनं, धनम्, अधिकारः इति एकैकम् अपि अनर्थाय' इति। एतत् त्रयम् अपि भवति अस्ति। मदान्धता अपि एतेन युक्ता अस्ति। ततः एव ज्ञायते – भवतः विनाशकालः सन्निहितः इतः। इदानीं वा विवेकं प्राप्य जागरूकतया व्यवहरतु। कृष्णस्य मैत्रीं सम्पादयतु" इति।

अन्धकस्य एतत् हितवचनं श्रोतुम् अशक्तः कंसः कोपेन उत्थाय ततः निर्गतवान्। अन्ये अपि उत्थाय मौनं





गोकुलं प्रति आगच्छत्। तस्य आगनरीतिं दृष्ट्वा एव भीताः सर्वे गोकुलवासिनः कृष्णं शरणं गतवन्तः।

कृष्णः अभयं दत्त्वा उत्थाय उच्चैः करताडनशब्दम् उत्पाद्य अश्वस्य लक्ष्यं स्वस्य दिशि आकृष्टवान्।

कृष्णस्य आह्वानं हासपूर्वकम् उत्तेजनं च दृष्टवतः राक्षसाश्वस्य उत्साहः द्विगुणितः अभवत्। निरायुधं कृष्णं दृष्ट्वा तु सः अतीव सन्तुष्टः।

खुरैः धूलिम् उत्पाद्य सः उच्चैः हेषारवम् अकरोत्। मुखम् उद्घाट्य दन्तान् प्रदर्शयन् कृष्णस्य समीपम् आगच्छत् च। कृष्णः झटिति पार्श्वे उत्प्लुत्य हस्तं तस्य मुखे प्रवेश्य तदीयां जिह्वां दृढं गृहीतवान्।

इदानीम् अश्वस्य पराक्रमः स्थगितः। कृष्णस्य ग्रहणं तावत् दृढम् आसीत् यत् अश्वेन ततः विमोचनं प्राप्तुम् एव न शक्तम्। सः पादान् इतस्ततः चालयन् अधः अपतत्।

कृष्णः बलात् आकृष्य तस्य जिह्वाम् उन्मूलितवान्। कण्ठं विदार्य दन्तान् भञ्जितवान्। रक्तं वमन् अश्वः आर्तनादं कुर्वन् तत्रैव गतप्राणः जातः।

'महत्याः आपत्तः वयं रक्षिताः' इति वदन्तः सर्वे गोकुलवासिनः कृष्णस्य समीपम् आगतवन्तः। कृष्णं परितः स्थित्वा विविधैः स्तोत्रैः तस्य स्तुतिं कृतवन्तः। गोपिकाः

निर्गतवन्तः।

रक्षकभटाः आगत्य उग्रसेनं कारागृहं प्रति नीतवन्तः।

अक्रूरः यदा गोकुलमार्गे आसीत् तदा कंसः केशिनामकं राक्षसवीरम् अन्येन मार्गेण गोकुलं प्रति प्रेषितवान्।

केशी अश्वरूपं धृत्वा महता वेगेन गोकुलं प्राप्तवान्।

अरण्यसमीपे शाद्वले स्थितान् गोपालकान् गाः च निर्दयं मारियतुम् आरब्धवान्। झञ्झावातः इव इतस्ततः सञ्चरन् सर्वान् नाशयन् आसीत् सः।

अश्वरूपी एषः राक्षसः गाः मारयित्वा तत्क्षणे एव तासां मांसं खादति। रक्तं पिबति च। शाद्वले स्थितान् सर्वान् मारयित्वा सः

पुष्पमालाभिः कृष्णम् अलङ्कृतवत्यः।

तदा नारदः अदृश्यरूपेण आकाशे तिष्ठन् स्वकीयं परिचयं निवेद्य उक्तवान्– "भोः कृष्ण! भवतः पराक्रमं द्रष्टुम् अहं देवलोकतः आगतवान् अस्मि। एतादृशं कार्यम् इन्द्रेण अपि कर्तुम् अशक्यम् एव। यस्मात् इन्द्रः अपि भीतः भवति तं केशिराक्षसं भवान् सलीलं मारितवान्। केशिराक्षसः मारितः इत्यतः भवतः नाम केशवः इत्यपि प्रसिद्धं भविष्यति" इति। अनन्तरं ततः निर्गतवान् च।

मथुरातः प्रस्थितः अक्रूरः सायंसमये गोकुलं प्राप्तवान्। सूर्यः अस्तङ्गतः आसीत्। अन्धकारं निवारयन् आह्लादकरीं कौमुदीं प्रसारयन् चन्द्रः उदितः। गोकुले गोपाः गवां नाम उच्चैः वदन्तः इतस्ततः सञ्चरन्तः आसन्। 'सोर् सोर्' इति गोदोहनशब्दः तत्र तत्र श्रूयते स्म।

एतत्समये रथं चालयन् आगतः अक्रूरः दूरतः एव बलरामं कृष्णं च दृष्ट्वा आनन्दतुन्दिलः अभवत्।

कृष्णं दृष्ट्वा सः रथात् अवतीर्य गोत्रप्रवरकथनपूर्वकं भक्त्या कृष्णं नमस्कृतवान्। कृष्णः तम् उत्थाप्य प्रीत्या आलिङ्ग्य कुशलप्रश्नान् पृष्ट्वा बलरामेण सह गृहं नीतवान्।

अक्रूरस्य अपेक्षानुसारं नन्दगोपादयः सर्वे ज्येष्ठाः अल्पे एव काले सम्मिलिताः। तान् उद्दिश्य अक्रूरः एवम् उक्तवान्–

"धनुरुत्सवः आचरणीयः इति मथुराधिपतिः कंसः निश्चितवान् अस्ति। तदर्थं गोकुलवासिनः सर्वे आगच्छेयुः। उत्सवार्थं यावदावश्यकं तावत् घृत-मधु-नवनीत-क्षीर-दध्यादिकम् इतः आगच्छेत्। उत्सवसन्दर्भे कृष्णेन बलरामेण च अवश्यम् उपस्थातव्यम् इति कंसस्य विशेषप्रार्थना अस्ति। भवन्तः सर्वे अचिरात् एव मथुराम् आगच्छन्तु। अहं तु बलरामकृष्णाभ्यां सह एव इतः प्रस्थानं करोमि। सर्वे सिद्धाः भवन्तु" इति।



उपवेशितवन्तः खलु? मया इदानीं क्षमा प्रार्थनीया आपतिता। कीदृशी अपमानकरी परिस्थितिः!" इति वदन् सः वेनूषीयं गौरवेण तीरम् आनीतवान्।

अबूब् हसन् वेनूषीयम् आपणं नीत्वा विशेषसत्कारं कृतवान्! अनन्तरम् इतरैः वणिजैः सह पुनरपि नौकासमीपं गतवान्। अनन्तरं सर्वेषां वणिजां पुरतः पृष्टवान्– "श्रीमन्! एतां कूर्मशुक्तिं विक्रीणीते वा भवान्?" इति।

वेनूषीयः चातुर्येण उक्तवान्– "योग्यं मूल्यं यदि लभ्यते तर्हि विक्रयणे का आपत्तिः?" इति।

"तर्हि किं मूल्यं दातव्यम्? वदतु तावत्। चर्चादिकम् अहं न इच्छामि" इति सूचितवान् अबूब् हसन्।

वेनूषीयः चाङ्गेन सह सम्भाषणार्थम् उत्थितवान्। तौ किञ्चित्कालं रहसि सम्भाषणं कृतवन्तौ।

अन्ते चाङ्ग् विनोदपूर्णेन स्वरेण हसनम् उक्तवान्– "दश सहस्रं रजतनाणकानि इच्छति इव सः" इति।

"किम् अहं तां शुक्तिम् उपायनरूपेण इच्छामि इति वा भवताम् अभिप्रायः? विक्रयणे आसक्तिः नास्ति इति तु एतेन ज्ञातम्" इति उक्तवान् हसन्।

सा शुक्तिः अमूल्या इति सर्वैः वणिजैः तदा ज्ञातम्। इतः परं वस्तुस्थितिगोपनेन किमपि प्रयोजनं नास्ति इति आलोच्य चाङ्ग् वेनूषीयस्य कथाम् उक्त्वा भवान् एव मूल्यनिर्णयं करोतु हसनं इति सूचितवान्। तदा हसन् पञ्चाशत्सहस्रं रजतनाणकानि दत्त्वा तां शुक्तिं क्रीतवान्।

वस्तुतः तस्याः शुक्तेः मूल्यं ततोऽपि द्विगुणितं स्यात् इति भावना अस्ति। शुक्तेः मध्ये असङ्ख्यानि रत्नानि भवन्ति इति प्रथा श्रूयते। तत् यथाकथम् अपि भवतु नाम, एतेन वेनूषीयस्य दारिद्र्यं तु अपगतम्। सत्कुलोत्पन्नां सुशीलां कन्यां परिणीय वाणिज्ये यशः प्राप्य सः सुखेन जीवितवान्।





# सौदामिनी

(गतसञ्चिकातः अनुवृत्ता)

सौदामिनी एवं कथां निरूप्य पितरम् उक्तवती– "तात! कनकप्रभया कौण्डिन्यदेशस्य युवराजः परिणेतव्यः, उत राजशेखरः, उत गन्धर्वः? त्रिषु कः परिणेतव्यः इति तु समस्या। पितुः इच्छा अन्या, मातुः इच्छा अन्या, कनकप्रभायाः इच्छा अन्या। एवं स्थिते कः परिणीतः चेत् धर्मः पालितः भवेत्? एषा कथायां प्रस्तुता समस्या।

मात्रा पित्रा वा सूचितं वरं यदि सा परिणयेत् तर्हि आत्मवञ्चना कृता भवेत्। यतः तस्याः इच्छा तु गन्धर्वे लग्ना अस्ति। एवं स्थिते विवाहे किं मानम् अनुसरणीयम्? किं कनकप्रभायाः इच्छा यथा तथा आचरणीयम्, उत धर्माधर्मं विचार्य तदनुगुणम् व्यवहरणीयम्? विवाहः तु धार्मिकः। अतः धर्ममार्गाविरोधेन विवाहः निर्णेतव्यः।

मां परिणेतुं यः आगमिष्यति तम् एतां कथां वदतु। सः यत् उत्तरं वक्ष्यति तां मह्यं निवेदयतु। तत् उत्तरं समीचीनं वा न वा इति अहं निर्णेष्यामि" इति।

तदा अनङ्गवर्मा उत्साहेन उक्तवान्– "कथानायिका कनकप्रभा गन्धर्वम् एव परिणेष्यति। सत्यं खलु?" इति।

सौदामिनी मन्दहासं प्रकटयन्ती निराकरणपूर्वकं शिरः चालितवती।

"अन्यं कं परिणयेत् सा?" इति पृष्टवान् अनङ्गवर्मा।

तदा सौदामिनी उक्तवती– "युक्तम् उत्तरम् इदानीम् अहं न वदामि। भवतः भावी जामाता वदिष्यति। किन्तु तात! त्रिषु अन्यतमस्य नाम सूचितं चेत् न पर्याप्तम्।

किमर्थं स एव परिणेतव्यः इत्यस्य कारणम् अपि सयुक्तिकं सूचनीयम्" इति।

अनन्तरं केचन मासाः अतीताः। सौदामिन्या उक्तां कथां श्रुत्वा कोऽपि राजकुमारः युक्तम् उत्तरं वक्तुं न शक्तवान्। पुत्र्याः विवाहविषये राज्ञः अनङ्गवर्मणः चिन्ता पुनः अधिका जाता।

एवं स्थिते एकदा अनङ्गवर्मणः दूरबन्धुः जयन्तदेशस्य राजा विचित्रसेनः स्वपुत्रेण चन्द्रहासेन सह एकं पत्रम् अनङ्गवर्मणे प्रेषितवान्।

तस्मिन् पत्रे एवं लिखितम् आसीत्– "प्रियबन्धो! अनङ्ग! उदन्तपुर्याः अस्माकं च मध्ये बहोः कालतः विरोधः आसीत्। युद्धे पराजिताः वयं उदन्तपुर्याः माण्डलिकाः जाताः इति विषयः भवता ज्ञातः एव। उदन्तपुर्याः इदानीन्तनः राजा विकर्णः 'पूर्विकाणाम् अपेक्षया अपि अधिककुत्सितबुद्धिः। मां पूर्णतः सिंहासनभ्रष्ठं कृत्वा मदीयं राज्यं स्वराज्ये योजनीयम् इति तस्य विचारः। अहं तु वृद्धः जातः। अचिरात् एव मम पुत्रः चन्द्रहासः सिंहासने उपवेशनीयः इत्यस्ति मम विचारः। चन्द्रहासः तु विकर्णस्य कुतन्त्रैः दुराचारेण च अतीव खिन्नः। सैन्यं सज्जीकृत्य उदन्तपुर्याः उपरि आक्रमणं करणीयम् इति सः चिन्तयन् अस्ति। अतः गिरिजनान् व्याधजातीयान् भिल्लजातीयान् च उत्साहिनः एकत्रीकृत्य युद्धशिक्षणं यच्छन् अस्ति। इदानीं युद्धार्थं युक्तः कालः। एतस्मिन् सन्दर्भे भवत्तः





"निवेदने न कापि आपत्तिः मम। किन्तु समस्यायाः परिहारं भवत्तः न निरीक्षे। एवम् एव शृणोतु" इति उक्त्वा सौदामिन्या उक्तां कथां श्रावितवान्।

पुनः उक्तवान् च– "सौदामिन्याः विवाहेच्छया आगताः सर्वे कथायां प्रस्तुतेषु त्रयाणां नामसु एकं नाम वदन्ति। सौदामिनी यथा अङ्गीकुर्यात् तथा सयुक्तिकं विवरणं तु कोऽपि न ददाति। तस्याः विवाहः युक्ते काले भवेत् वा न वा इत्येव मम सन्देहः। अतः एव अहं निद्राम् अपि न प्राप्नोमि। चिन्तायाः परिहारः कथम् इति मार्गम् अपि न जानामि" इति।

सौन्यसाहाय्यं धनसाहाय्यं च निरीक्ष्यते। एतदुभयं सेत्स्यति एव इति आशया चन्द्रहासः भवत्समीपम् आगतवान् अस्ति" इति।

एतत्पत्रं पठित्वा अनङ्गवर्मा चन्द्रहासम् उक्तवान्– "वत्स! भवता इष्टं सैन्यसाहाय्य धनसाहाय्यं च अहं सन्तोषेण दास्यामि। तत्र न कोऽपि क्लेषः। मम तु चिन्ता यत् विशालस्य राज्यस्य विपुलायाः सम्पत्तेः च स्वामी अपि अहम् अपरिहार्यया समस्यया ग्रस्तः अस्मि। जाले पतितस्य हरिणस्य इव स्थितिः अस्ति मम" इति।

"तादृशी का सा समस्या? माम् अपि निवेदयतु किञ्चित्" इति उक्तवान् चन्द्रहासः।

"राजकुमारी तृप्ता यथा भवेत् तथा उत्तरं वक्तुम् अहं शक्नोमि इति भाति। तथा करोमि वा? आक्षेपः कोऽपि नास्ति खलु भवतः?" इति पृष्टवान् चन्द्रहासः।

तत् श्रुत्वा अनङ्गवार्मा सन्तोषेण– "एतदपेक्षया सन्तोषकरं किम् अन्यत् स्यात्? मम पुत्री तृप्ता भवति चेत् पर्याप्तम्। विचिन्त्य उत्तरं वदतु। कथां पुनः श्रावयामि वा?" इति पृष्टवान्।

"तस्य आवश्यकता नास्ति" इति उक्त्वा चन्द्रहासः क्षणकालम् आलोच्य उक्तवान्– "पुत्र्याः विषये पिता स्वाच्छन्द्येन व्यवहर्तुं न अर्हति। अतः पुत्रीं कनकप्रभां पणत्वेन निश्चेतुं चक्रसेनस्य अधिकारः सर्वथा नास्ति। अतः कनकप्रभया कौण्डिन्यदेशस्य

राजकुमारः परिणेतव्यः नास्ति। चित्रसेनेन यत् वाग्दानं कृतं तत् न न्याय्यम्।

वरुणदत्तः कनकप्रभायाः. सौन्दर्येण आकृष्टः सन् क्षणिकेन व्यामोहेन तां परिणेतु सिद्धः जातः। कनकप्रभा अपि यौवनसहजेन आकर्षणेन वशीकृता गन्धर्वस्य बाह्यसौन्दर्यं दृष्ट्वा तेन कृतां प्रशंसां श्रुत्वा च विवाहार्थं सिद्धा जाता। एषः तु युक्तायुक्तताम् अविचार्य कृतः निर्णयः इति तु स्पष्टम् एव। एवम् उभयोः अपि मनःशुद्धिः न आसीत्। अतः तयोः विवाहः मम दृष्ट्या धर्मसम्मतः सर्वथा न।

'कनकप्रभायाः भावी पतिः राजशेखरः एव' इति निश्चित्य इन्दुमतीदेवी तं भावं सूच्यैः वचनैः प्रकटितवती। कनकप्रभायाः आशयं ज्ञातुम् एव– 'अमूल्यम् एतत् रत्नं भवते दद्याम्' इति राजशेखरम् उक्तवती। इन्दुमतीदेव्या वरचयने विवेकः आश्रितः। एषः सम्बन्धः एव सर्वोत्तमः धर्मोपेतः च। अतः कनकप्रभा राजशेखरम् एव परिणयेत्। तेनैव औचित्यम्। तेन एव धर्ममार्गपरिपालनं सिध्यति च" इति।

अनङ्गवर्मा एतेन उत्तरेण सन्तुष्टः सन् तत् उत्तरं सौदामिनीं प्रति प्रेषितवान्।

किञ्चित्कालानन्तरं सौदामिन्याः आत्मीया सखी शुकेन मालया च सह आगत्य चन्द्रहासम् उक्तवती– "युवराजं चन्द्रहासं शिरसा प्रणमामि, इति उक्त्वा राजकुमारी एवं सन्देशं प्रापयितुं माम् आदिश्य शुकद्वारा एतां पुष्पमालां प्रेषितवती अस्ति" इति।

शुकः पुष्पमालां चन्द्रहासस्य कण्ठे अस्थापयत्। एतत् दृष्टवतः अनङ्गवर्मणः चिन्ताभारः अपगतः अभवत्।

अनन्तरं शुभे मुहूर्ते चन्द्रहास-सौदामिन्योः विवाहः सवैभवं सम्पन्नः।

अनन्तरं चन्द्रहासः श्वशुरस्य सैन्येन सह गत्वा उदन्तपुर्याः उपरि आक्रमणं कृत्वा विकर्णं पराजितवान्। चन्दनदेशस्य जयन्तदेशस्य उदन्तपुर्याः च राजा सन् चिरकालं सुखेन जीवनं यापितवान्।





# कुक्कुटपाकः

नागेशस्य पत्नी विमला। नागेशः प्रतिदिनं प्रातः एव गृहात् प्रस्थाय कृषिक्षेत्रे कार्यं कृत्वा सायं गृहं प्रत्यागमिष्यति। विमला गृहे तिष्ठन्ती गृहकार्याणि करोति, कुक्कुटपालनम् अपि करोति।

विमलायाः कुक्कुटप्रीतिं जानन्तः ग्रामीणाः स्वकीयान् कुक्कुटशावकान् आनीय विमलायाः आधीन्ये स्थापयन्ति। यदा ते कुक्कुटाः प्रौढाः भवन्ति तदा तेषु द्वित्रान् विमलायै एव दत्त्वा शिष्टान् स्वगृहं नयन्ति स्म। एवं प्राप्ताः २५-३० कुक्कुटाः विमलायाः गृहे आसन्।

नागेशस्य तु कुक्कुटमांससेवने विशेषासक्तिः। एकं कुक्कुटं मारयित्वा तदीयेन मांसेन पाकं करोतु इति पत्नीं तदा तदा साग्रहं वदति नागेशः। "तत् तु सर्वथा न शक्यते" इति स्पष्टं निराकरोति स्म विमला।

बहुवारम् उक्त्वा श्रान्तः नागेशः एकदा पत्नीम् उक्तवान्– "भोः, ह्यः एकं महापुरुषं दृष्टवान्। 'अस्माकं क्षेत्रे फलसमृद्धिः कुतः नास्ति?' इति तं पृष्टवान् च। तदा सः उत्तरं दत्तवान् यत् अस्माकं ग्रामस्य सीमायां सालवृक्षः अस्ति खलु? तत्र केदारेश्वरी निवसति इति। प्रतिदिनं कुक्कुटमांसेन पाकं सज्जीकृत्य वृक्षस्य कोटरे स्थापयित्वा साक्षात् प्रत्यागन्तव्यम् इति सः सूचयति। एवम् एकमासं यावत् समर्पितं चेत् सन्तुष्टा केदारेश्वरी फलसमृद्ध्या अनुग्रहीष्यति इति सः उक्तवान्" इति।

पत्युः वचनं श्रुत्वा विमला – "स्यात् नाम, फलसमृद्ध्यर्थं दैवानुग्रहः अत्यावश्यकः" इति आलोच्य पत्युः वचनं पालयितुं सिद्धा जाता।

अनन्तरदिने विमला भक्त्या देवं ध्यात्वा

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

नेत्रे निमील्य महता खेदेन एकं कुक्कुटं मारितवती। तदीयेन मांसेन पाकं कृत्वा अन्नेन सह संयोज्य ग्रन्थिरूपेण बद्ध्वा ग्रामसीमायां स्थितस्य सालवृक्षस्य कोटरे स्थापितवती, पृष्ठतः अपश्यन्ती साक्षात् गृहम् आगतवती च।

विमलायाः प्रतिगमनानन्तरं वृक्षस्य उपरि स्थितः नागेशः अधः आगत्य कोटरस्थं कुक्कुटमांसोपेतं भोजनं ससन्तोषं स्वीकृतवान्।

एवम् एव एकः मासः अतीतः। विमला गृहे स्थितस्य अन्तिमकुक्कुटस्य मांसेन पाकं कृतवती। एतावता अपि केदारेश्वर्याः अनुग्रहः न दृष्टः आसीत्।

मांसभोजनं स्वीकृत्य सालवृक्षसमीपं गच्छन्ती सा क्षेत्रं परिशीलितवती। तस्याः मनसि तदा कश्चन सन्देहः उत्पन्नः। सा मांसभोजनं यथापूर्वं कोटरे स्थापयित्वा किञ्चिद्दूरं मौनं गत्वा अन्यस्य वृक्षस्य पृष्ठतः निलीय सालवृक्षं पश्यन्ती स्थितवती।

नागेशः प्रतिदिनम् इव वृक्षात् अवतीर्य मांसभोजनार्थम् उद्युक्तः जातः। एतत् दृष्टवती विमला कोपेन ज्वलन्ती वेगेन सालवृक्षसमीपम् आगतवती। पतिं मुष्ट्या प्रहरन्ती अवाच्यैः शब्दैः निन्दितवती। "एतादृशेन वञ्चकेन सह इतःपरं जीवन सर्वथा न शक्यते। अद्य आरभ्य एषः मम पतिः न " इति वदन्ती गृहं प्रतिगतवती।

सा मातृगृहं गन्तुं निश्चितवती। स्वकीयानि सर्वाणि वस्तूनि ग्रन्थिरूपेण



बद्ध्वा एकस्मिन् महाकण्डोले स्थापितवती। प्रतिवेशिनीः निवेदयितुं ततः गतवती च।

पत्नीम् अनुसरन् नागेशः अपि गृहम् आगतवान्। यदा पत्नी प्रतिवेशिनीनां गृहं प्रति प्रस्थिता तदा एषः मन्दं गृहं प्रविष्टवान्। पत्न्याः आशयः तेन ज्ञातः। अतः महाकण्डोले स्वयम् उपविश्य आत्मनः उपरि वस्तूनां ग्रन्थिं स्थापितवान्।

विमलायाः हठात् निर्गमनं श्रुत्वा आश्चर्यं प्रकटयन्त्यः प्रतिवेशिन्यः तां प्रेषयितुं तस्याः गृहम् आगत्य महाकण्डोलं विमलायाः शिरसि स्थापितवत्यः। तत्समये ताः उक्तवत्यः– "कियान् भारः एतस्य! तावद्दूरं कथं वक्ष्यति?" इति।

"भारवहनं न क्लेशाय। प्रतिदिनं तदेव कार्यं खलु मम" इति वदन्ती विमला कण्डोलं वहन्ती मातृगृहं प्रस्थितवती।

मातृगृहं गता विमला कण्डोलं गृहस्य स्वागतप्रकोष्ठे पातयित्वा रुदती अन्तः गतवती। "अम्बऽऽ" इति आक्रन्दनं कुर्वती पत्या कृतां वञ्चनां निवेदितवती। तत्समये नागेशः कण्डोलात् बहिः आगच्छन्– "माम् अपि एषा आत्मना सह आनीतवती" इति हसन् उक्तवान्।

"अहो! स्वगृहे स्थितान् कुक्कुटान् समाप्य इदानीं मम गृहस्य कुक्कुटान् खादितुम् उपायेन अत्र आगतवन्तौ वा? पतिः यदा पृच्छति तदा कदाचित् वा कुक्कुटमांसेन पाकः कृतः चेत् एवं न अभविष्यत्। अतिव्यामोहः न उचितः। अस्तु तावत्, अद्य अहम् कुक्कुटमांसेन पाकं करिष्यामि। भोजनं कृत्वा इतः गच्छताम्" इति उक्तवती विमलायाः माता।

एवं नागेशः विमला च पुनः स्वगृहं प्रस्थितवन्तौ। मार्गे नागेशः उक्तवान्– "आगमनसमये भवती माम् उन्नीतवती। इदनीं भवती कण्डोले उपविशतु" इति।

"तथा किमपि मास्तु। मया दोषः कृतः। फलम् अनुभुक्तं च" इति क्षीणेन स्वरेण उक्तवती विमला।





# अपूर्वः जलपातः!

अर्जेण्टीना-ब्रेजिल् देशयोः सीमाप्रदेशे स्थितः इगुवाक् जलपातः वर्षाकाले अशीतिं दिनानि प्रतिसेकेण्ड् १६७,५०० घनपादमितं जलं निस्सारयति। एतस्य जलपातस्य अधः प्रवहन्ती नदी एतावता द्विवारं जलपातस्य औन्नत्यं यावत् तावत् उन्नतम् (२५० द्वादशाङ्गुलम्) उद्गता आसीत्।

# जलवासी मण्डूकः



दक्षिणाफ्रिकादेशीयः विशिष्टः नखयुतः मण्डूकः आजीवितान्तं जले एव निवसति। एतस्य मण्डूकस्य पृष्ठभागे स्थितयोः पादयोः नखाः भवन्ति। तेषां साहाय्येन सः स्वकीयम् आहारं सम्पादयति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

कठिनशब्दानां सान्दर्भिकाः अर्थाः

| शब्दः | Meaning |
|---|---|
| अङ्गारः - | Charcoal |
| अपलापः - | Denial of truth |
| आजीवितान्तम् - | As long as one is alive |
| आनन्दतुन्दिलः - | Greatly delighted |
| कीलम् - | Peg |
| कुक्कुटः - | Cock |
| कुसीदवणिक् - | Pawnbroker |
| कूर्मः - | Tortoise |
| कोटरः - | Hollow of a tree |
| गोदोहनम् - | Milking the cow |
| चतुष्टयम् - | A group of four |
| छुरिका - | Knife |
| जल्पनम् - | Gossiping |
| तल्पः - | Sofa |
| त्रितयम् - | A group of three |
| त्वक् - | Husk |
| नखः - | Nail |
| नारङ्गम् - | Orange |
| निखननम् - | Burying |
| नियतरूपेण - | Regularly |
| निस्सारयति - | Emits |
| नीडः - | Nest |
| पञ्चकम् - | A group of five |
| प्रतिभूत्वम् - | Surety |
| मद्यपः - | Drunkard |
| मध्यगः - | Broker |
| महानौका - | Ship |
| मृदुलः - | Soft |
| रथयात्रा - | Car festival |
| विकत्थनम् - | Boasting |
| विक्रीणीते - | Sells |
| विदार्य - | Having split |
| विलक्षणः - | Peculiar |
| वृद्धिः - | Interest |
| शवस्थानम् - | Tomb |
| शाद्वलः - | Grassland |
| शुक्तिः - | Shell |
| समयस्फूर्तिः - | Resourcefulness |
| समावेशः - | Conference |
| सालवृक्षः - | Sal tree |
| स्रुतम् - | Oozed out |
| सेत्स्यति - | Attains |

* * *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां सप्टम्बर्-८८ मासे प्रकटयिष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः मसपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'मे' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **शक्तिह्रासात् अस्वातन्त्र्यम्।**

द्वितीयचित्रम् - **अस्वातन्त्र्यात् शक्तिह्रासः।**

प्रेषिका - शारदा एस्. भट्ट, द्वारा/ एस्.जि. जोषि, संस्कृतमहापाठशाला, गोकर्णम्, उ.क. कर्णाटकम्।


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०-००

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

Circles, triangles, squares, semi-circles...

The wonder world of geometry at your finger tips!

# OMEGA Sony

gives you perfection

OMEGA Sony

MATHEMATICAL DRAWING INSTRUMENTS

ART NO. 1635

*Also available.*

- Omega Glory
- Omega Liba
- Omega World Time

*Omega– The ultimate in quality*

Winner of Top PLEXCONCIL EXPORT AWARD 1978-79-80-81-82-83-84






**Allied Instruments Pvt. Ltd.,**
30-CD Government Industrial Estate
Kandivli (West), Bombay-400 067.
Phone: 692425 • 685068 • 696721 • 697188
Telex: 011-73369 AIPL • Cable ARTCORNER

---

*Distributors*: GREATER BOMBAY : **D. Jagjivandas & Company,** 177, Abdul Rehman Street, Bombay-400 003. Ph.: 326524 MAHARASHTRA : **A. Aalok & Company,** 107, Regal Industrial Estate, Acharya Donde Marg, Sewree (West), Bombay-400 015. Ph.: 4133295/4133215 GUJARAT : **N. Chimanlal & Co.** 'Jasmin' Building, Near Firdaus Flats, Khanpur, Ahmedabad 380 001. Ph.: 395198/399570 DELHI, HARYANA, PUNJAB, J.K. & HIMACHAL PRADESH : **Bharati Traders,** 89, Chawri Bazar, Delhi 110 006. Ph.: 262954 KARNATAKA, ANDHRA PRADESH & GOA : **Sanghvi Corporation,** Suresh Bldg., No. 17, 4th Cross, Kalasipalyam, New Extension, Bangalore 560 002. Ph.: 225702 CALCUTTA & WEST BENGAL : **Sanghvi Corporation,** 14/1/1A, Jackson Lane, 2nd Floor, Calcutta 700 001. Ph.: 262141 UTTAR PRADESH : **Sanghvi Corporation,** 7, A. Bahmai Marg, Kaiser Bagh, Lucknow (U.P.) Ph.: 48307. TAMIL NADU : **Sanghvi Corporation,** [illegible]